विद्याकेन्द्राद्बहिष्कारम् आप्तं तं राजपूरुषाः ।
चत्वारिंशत्प्रमाणैस्तु छात्रैः साकमबन्धयन् ॥४५॥

जननी प्रार्थयाञ्चक्रे दुःखभारनिपीडिता ।
सोऽथ तस्माद् विनिष्क्रान्तो रक्षापुरुषबन्धनात् ॥४६॥

**कोकुक्षिने**ऽवसत्सोऽयं परिवारेण संयुतः ।
पुस्तकानाञ्च बाहुल्यात् प्रसन्नोऽभूद्धि लेनिनः ॥४७॥

तुषारपातकाले च **काजानं** प्रति निर्वृतः ।
विद्याकेन्द्रे पुनर्नायं प्रविवेश विदांवरः ॥४८॥

गृहीतं वाटिकायुक्तं भाटकेन निकेतनम् ।
महानसे पठँश्चायं सुधीः कालं व्यजीगमत् ॥४९॥

अष्टादशवयस्कोऽयं **मार्क्स**वादस्य चिन्तनम् ।
महानसे हि प्रारेभे विबुधानां शिरोमणिः ॥५०॥

निगूढाध्ययनं चक्रे सिद्धान्तानां मुहुर्मुहुः ।
**मार्क्स**वादविदां तेन संयतेन मनीषिणा ॥५१॥

तस्माद्धि चाग्रिमे वर्षे **समरां** प्रति प्रस्थितः ।
**मार्क्स**वाददलं तत्र स्थापयामास सत्वरम् ॥५२॥

विद्याकेन्द्रे प्रवेशाय स्वसुतस्य तु **मारिया** ।
तदाऽऽरेभे प्रयत्नान् सा माता लोके गरीयसी ॥५३॥

**सैन्टपीटर्सबर्गे**ऽयं विधिशिक्षाकृते तदा ।
शीघ्रं चानुमतिं लेभे यन्त्रालयनिदेशनात् ॥५४॥

ग्रीष्मतापप्रतप्तेऽपि कृतभूरिपरिश्रमः ।
विसस्मार स्वयं सर्वं विद्याचुञ्चुर्विवेकिदृक् ॥५५॥

ससम्मानमुपाधिं स लेभे विधिविधानतः ।
वाक्कीलवृत्तये लेभे तत आज्ञां हि शासनात् ॥५६॥

दुर्भाग्याद् भगिनी **चोल्गा**, आन्त्रज्वरनिपीडिता ।
परासुरभवच् शीघ्रं राजधान्याञ्च सम्प्रति ॥५७॥

सह रेमे स्वयञ्चायं वाल्ये वयसि **चोलगया** ।
लोके हि दारुणा पीडा विस्मर्तुं केन शक्यते ॥५८॥

पीडां परेषु निक्षिप्य जनोऽयं सुखमेधते ।
लोके हि विरलः कोऽपि परपीडापहारकः ॥५९॥

स्वमातुश्च समादेशात् **समरां** प्रति निर्वृतः ।
यापयन् स्वाधिकं कालं **मार्क्सवादवलयेषु** च ॥६०॥

**मारियान्ना डिमत्री** च तस्य मित्राणि भूतले ।
आसन् येषां कुटुम्बेऽस्मिन् **लेनिनो** मुमुदेतराम् ॥६१॥

**डिमत्रीमारिये** तस्य भगिन्यौ सम्बभूवतुः ।
तयोराकृतिभाग्भ्राता **तस्यालक्षेण्डरो** ह्यभूत् ॥६२॥

प्रोन्नतं हि कपोलास्थि चायताकारनासिका ।
**व्लाविमीरो** विडालाक्षो महासत्वो दृढाशयः ॥६३॥

एकविंशतिवर्षस्य शिरोरुहविशीर्णता ।
बुद्धेः प्रकर्षगाम्भीर्ये सूचयामास सत्वरम् ॥६४॥

दुष्कालपीडितं नृणां कृषकाणां दलं यदा ।
नगरेषु समायातं, बभाषे **लेनिनो** तदा ॥६५॥

समाजार्थव्यवस्थायां विकृतिर्यत्र दृश्यते ।
तत्र दुर्भिक्षभूतस्य छाया पतति भूतले ॥६६॥

यदाप्रभृति लोकेऽस्मिन् समाजार्थविभाजनम् ।
सम्यङ् न क्रियते तावत् सुकालो न भविष्यति ॥६७॥

धनिकानां समाजस्तु स्वसाहाय्यचिकीर्षया ।
दमनं श्रमिकाणाञ्च कुरुते स्वधिया ध्रुवम् ॥६८॥

दुष्कालेन समाजस्य ध्रुवं भावि विवर्तनम् ।
पूंजीवादिसमाजस्य पतनं तेन निश्चितम् ॥६९॥

मनोवैज्ञानिकञ्चास्ति सर्वं प्राकृतिकञ्च तत् ।
मिथ्याप्रकल्पितं तत्त्वं क्षुधितोदरपूरणम् ॥७०॥

कल्याणी लेनिनी वाणी भृशं दुष्कालपीडिता ।
दुष्काले हि पदं चक्रे श्रमिकेषु विशेषतः ॥७१॥

शिशिरर्तौ स्वयं यातः सैन्टपीटर्सबर्गकम् ।
सदस्योऽभूत्तदा तत्र महतां गुप्तमण्डले ॥७२॥

जनजागरणं रूसे बभूव श्रमिकेषु वै ।
परञ्चान्दोलने नेमे भागं गृह्णन्ति कर्हिचित् ॥७३॥

लेनिनस्य प्रयत्नैस्तु श्रमिकास्तत्त्वदर्शिनः ।
आन्दोलनाय संलग्ना मुक्तरूपेण भूतले ॥७४॥

श्रमिकाणां विश्रम्भो
वृक्षः पाखण्डतापतप्तानाम् ।
संस्कृतिसत्संरम्भो
लेनिनशक्रश्चिरं जयतु ॥७५॥

इति पद्म-शास्त्रिविरचिते श्रीलेनिनामृतमहाकाव्ये "श्रीलेनिनस्य छात्रजीवननिदर्शनम्" नाम चतुर्थः सर्गः ॥

# पञ्चमः सर्गः

[ लेनिनस्य साइबेरियायां कारावासः ]

दुष्कालकालेन निपीडितानां संरक्षणं सम्प्रति दुःखितानाम् ।
आह्वानमासीत् खलु लेनिनस्य विज्ञस्य सर्वप्रथमं पृथिव्याम् ॥ १ ॥

गुप्तस्य सामाजिकमण्डलस्य सदस्यतामाप युवा तदानीम् ।
स्वग्राममध्यात् कृषकाः श्रमाय यदा समापुर्नगरेषु शश्वत् ॥ २ ॥

औद्योगिकञ्जागरणञ्च रूस आसीन्नवं प्रस्फुटितं तदैव ।
विभिन्नवर्गेषु च गुप्तरीत्याऽदुः साम्यवादस्य यदा तु शिक्षाम् ॥ ३ ॥

श्रीब्लादिमीरस्य मतेन शिक्षा हिताय साधारणसंगमेषु ।
न गुप्तरीत्या श्रमिकेषु देया परं विरोधं व्यदधुर्विरुद्धाः ॥ ४ ॥

जातः स नेता महतां तदानीं जुघोष पत्रं निजघोषणायाः ।
पीटर्सबर्गश्रमिकेषु तस्य स्फुटः प्रभावः परिलक्षितोऽभूत् ॥ ५ ॥

विलोक्य तेषां श्रमिणां विरोधं सशङ्कितोऽभूत् खलु सर्वकारः ।
पप्रच्छ रक्षापुरुषप्रधानं राष्ट्रस्थितिं वै खलु ज्योलि-एन्स्कीम् ॥ ६ ॥

लिलेख पत्रं न भयस्य हेतुर् भविष्यति द्रागपि मण्डलं तत् ।
परं विरोधो जनतादलस्य नोपेक्षणीयो भवता कथंचित् ॥ ७ ॥

द्वे पुस्तके लेखकयोस्तदानीं प्रकाशिते शासनशासनेन ।
शशंस चैकं हि परं निनिन्द श्रीलेनिनो वै प्रथमं सभायाम् ॥ ८ ॥

पोत्रोसवश्चात्र लिलेख पश्चाच् श्रीब्लादिमीरस्य विचेष्टितं तत् ।
स्रोतः स शक्त्या, अधिकश्रमेण खल्वाट आसीन्नितरां तदानीम् ॥ ९ ॥

विचारगाम्भीर्यवशाद्धि नूनं वृद्धश्चतुर्विंशतिवर्ष एव।
अलक्ष्यत क्रान्तिपथप्रदर्शी स शीतरोगेण च पीडितोऽभूत् ॥१०॥

ततो हि रुग्णं स्ववपुर्विलोक्य स स्वास्थ्यलाभाय ययौ विदेशम्।
सुभेषजैः **पेरिस** आत्मनोऽयं सुस्वास्थ्यलाभञ्च पुनः प्रपेदे ॥११॥

पाश्चात्त्यदेशेष्वपि साम्यवादविवेचकैः सार्धमसौ ह्युवास।
**श्रीकार्लमार्क्सस्य** सुतापतिर्यः सार्धं स तेनापि चकार वार्ताम् ॥१२॥

**प्लीखानव**स्तस्य गुरुः स शिष्यश् चासीत्तदानीं निजराजनीत्याम्।
पूर्वं **जिनेवा**नगरस्य पार्श्वे **श्रीलेनिन**स्तेन समं मिमेल ॥१३॥

**प्लीखानवो** दार्शनिकः पृथिव्यां विख्यात आसीन्न परं तुतोष।
नेताऽभवत् सत्वरमस्य चित्तं पुनर्विरक्तं जनराजनीत्याः ॥१४॥

स्वसंस्कृतेर्हीनदशां विलोक्य तद्रक्षणार्थं ह्यभवत्स नेता।
परन्तु बुद्ध्या यशसा श्रिया च **श्रीव्लादिमीरः** प्रथमस्ततोऽभूत् ॥१५॥

तयोर्मिथस्तत्क्षणमेव चर्चा जाता सुसाहित्यकलाविधौ या।
**प्लीखानव**स्तेन हि तं युवानं सुकल्पनाशून्यमतिं तु मेने ॥१६॥

परं यदा शासनतन्त्रवार्ता जाता तदा विस्मितमानसोऽभूत्।
**श्रीलेनिन**स्य प्रतिभां विलोक्य मस्तिष्कशक्तिं गहनानुभूतिम् ॥१७॥

**प्लीखानव**श्चाद्य भृशं जहर्ष सम्प्राप्य संघर्षकृते सुयोग्यम्।
नेतृत्वशक्तौ निपुणं नितान्तं **श्रीव्लादिमीरं** जनतादलस्य ॥१८॥

**श्रीव्लादिमीर**स्तु विचारहेतोर्, **एक्सेलरोड**ेन समं तदानीम्।
**प्लीखानव**स्य प्रहितञ्च पत्रं नीत्वा **जिनेवा**नगराद्ययौ सः ॥१९॥

**श्रीलेनिनः** स्वग्रथितञ्च तस्मै प्रकाशितं संकलनं ददौ वै।
विलोक्य लेखान् मुमुहे च तस्य मस्तिष्कशक्तिप्रभवं प्रकाशम् ॥२०॥

निन्दाप्रहारैः खलु विव्यथे स ह्युदारवाद**स्य** प्रवर्तकेषु।
उद्देश्यमासीदुभयोः समानं वार्ता तयोस्तेन तु विस्तृताभूत् ॥२१॥

ते निर्णयं चक्रुरयं नृनेता सम्यक्तया संगठनप्रणेता ।
आन्दोलनार्थं खलु शक्त एष नास्मात् परः कश्चिदिहास्ति युक्तः ॥२२॥

**श्रीलेनिनः** सर्वमिदं विभाव्य स्वयं स्वदेशञ्च पुनर्निवृत्तः ।
**पीटर्सबर्गे** स चकार वार्तां **श्रीमारतोवेन** समं तदानीम् ॥२३॥

**श्रीमारतोवस्य** निभाल्य योगं प्रदर्शनेषु प्रतिभान्वितस्य ।
तद्विश्वविद्यालयतस्तदानीं निष्कासितः क्रान्तिविरोधिभिः सः ॥२४॥

निर्वासितः सत्यमसौ विदेशे पश्चात्स नेता **विलनास्थिते** च ।
आन्दोलने प्राप्य महत्त्वपूर्णं भागं पृथिव्यां प्रथितस्तदाभूत् ॥२५॥

गुप्तस्थले तौ मिलतः प्रकामं परं न तौ गुप्तचरैरगम्यौ ।
सतर्कदृष्ट्या पृथगालुलोके कार्यन्तयोः सम्प्रति सर्वकारः ॥२६॥

**श्रीलेनिनः** स्वां भगिनीं लिलेख चारक्षिभिर्वा मयि संगृहीते ।
तथाविधं त्वञ्च विधेहि यत्नं मां द्रष्टुमम्बा न यथा समैतु ॥२७॥

कारागृहे मां निभृतं विलोक्य शोकप्लुता साश्रुमुखी तदा सा ।
भ्रातुः प्रियस्य श्रितराष्ट्रभक्तेः स्मरिष्यति ज्येष्ठसुतस्य दुःखम् ॥२८॥

अनेकशो गुप्तचरप्रयत्नैर् अग्राह्यतां वीक्ष्य तयोः प्रवृत्तेः ।
द्रव्येण सम्भेदकमात्मनीनं कृत्वा ससम्भारमिमौ गृहीतौ ॥२९॥

**पीटर्सबर्गस्य** दृढं निबद्धे कारागृहे नो नियमाः कठोराः ।
सप्ताहमध्ये निजका द्विरर्हा यस्यानवालोकितुमेकशो हि ॥३०॥

विलोक्य रक्षापुरुषैश्च सम्यग् उपायनं प्रेषितवस्तुजातम् ।
भोज्यादिकं वा पठनीयमन्यं कारागृहे दातुमिमे समर्थाः ॥३१॥

**श्रीमारिया** तेन सुतेन सार्धं सदामिलद्वै नियमानुसारम् ।
**अन्नां** हि संकेतलिपिञ्च भाषाम् अपाठयत्पूर्वमसौ मनीषी ॥३२॥

**अन्ना** हि संकेतलिपिं पठित्वा तद्वाचिकं वै **जनतादलेऽस्मिन्** ।
वितीर्य पत्रव्यवहाररूपं चाचालयत् कार्यविधिं समग्रम् ॥३३॥

विभिन्नसामाजिकमण्डलैश्च ध्रुवं मिलित्वा ननु मुक्तिलीगम् ।
संस्थापितं येन च सर्वकारो भ्रमेण तेषां दमनं न कुर्यात् ॥३४॥

परन्तु नैषां सफलः प्रयत्नः सर्वे गृहीताः खलु ये सदस्याः ।
आरक्षिभिर्वा निपुणं निरीक्ष्य पोत्रोसवश्चापि तथा गृहीतः ॥३५॥

गुप्तं दलस्याप्यचलत् प्रचारः श्रीलेनिनस्तस्य निदेशकोऽस्ति ।
कारागृहस्थोऽपि च मुख्यनेता निर्वाचितः सम्प्रति तैः सदस्यैः ॥३६॥

वासःसमुत्पादनकर्मनिष्ठैर् बहिर्विधेयं गमनं स्वकेन्द्रात् ।
तदैव सिद्धिः श्रमसाधकानां प्रासारयत्तेषु निदेशपत्रम् ॥३७॥

सम्पत्तिशास्त्रं हि तथार्थशास्त्रं कारागृहे सम्प्रति सोऽध्यगीष्ट ।
रूसेऽर्थवादस्य विकासनाम्ना जग्रन्थ ग्रन्थं प्रथमं स तत्र ॥३८॥

चतुर्दशेऽब्दे च यदा स तस्मात् कारागृहान्मुक्तिमवाप यावत् ।
न्यूनः शरीरस्य च तस्य भारः संदृश्यते स्वस्थ इवातिहृष्टः ॥३९॥

निष्कासनं तस्य परं बभूव यावत्त्रिवर्षं सइबेरियायाम् ।
ग्रामे शुशेन्स्कव्ययमाजगाम लब्ध्वा तदा मासिकवृत्तिलाभम् ॥४०॥

सुस्वास्थ्यलाभः परमञ्च शान्तं तज्जीवनं तत्र सुखेन युक्तम् ।
दैनन्दिनं वै मृगयाविनोदाश् चानन्ददास्तस्य कृते ह्यभूवन् ॥४१॥

प्रातः समुत्थाय ययौ तडागं जग्राह मीनांश्च पवित्रकेण ।
अच्छे जले संतरणं विधाय शनैः शनैः सद्म समाजगाम ॥४२॥

एकान्तभागे प्रकृतिस्थले च स प्राकृतं जीवनमाससाद ।
प्राप्तावकाशः परपुस्तकैश्च स्वाध्यायकालं सफलं चकार ॥४३॥

श्रान्तः स सायं कृषकस्य वीणाम् अवादयत्तन्मयतामुपेत्य ।
विस्मृत्य सर्वं रणनस्वरेण चाकर्षिता ग्राम्यजना उपेयुः ॥४४॥

प्राज्यञ्च दुग्धं मधुमांसमिष्टं भुक्त्वा स्वदेहेन विवर्धमानः ।
पत्राणि लेखांश्च लिखन् कुटीरे बुद्ध्या शरीरेण च कल्य आसीत् ॥४५॥

कदाचिदारक्षिजना अविक्षन् जनाकुलं तत्सदनं विनाऽऽज्ञाम् ।
को ब्लादिमीराध्ययनस्य कक्षस्, तेष्वेक उन्नद्धमना उवाच ॥४६॥

श्रीलेनिनः सम्प्रति चेङ्गितेन स्वकक्षभागं पठनस्थलञ्च ।
न्यवेदयत्ते निपुणं निरीक्ष्य प्रश्नांश्च कृत्वा प्रययुर्विरामम् ॥४७॥

पुनः ससम्मानमिमे शिरांसि ववन्दिरे तं विनतानि कृत्वा ।
जनाः पुनर्विस्मयिनो बभूवुर् विवर्तितं दृश्यमिदं विलोक्य ॥४८॥

आसीन्नदेज्दा विदुषी च नारी ह्यपाठयत् सा श्रमिकान् स्वदेशे ।
सा ब्लादिमीरस्य सखी बभूव पत्राणि सोऽस्या अददात् सदैव ॥४९॥

निष्कासिताभूद्धि यदा नदेज्दा यूफाप्रदेशाय तदा ययाचे ।
ग्रामे शुशेन्स्केऽस्ति सखा ममैकस् तत्रैव वासो हि वितीर्यतां मे ॥५०॥

सा तस्य साचिव्यमुपेत्य कार्यं चक्रे श्रमेणात्र सहायिकाभूत् ।
प्रातः स्वयं सा ह्यनुवादकार्यं सायं हि तत्पाण्डुलिपिं चकार ॥५१॥

तस्याः श्रमेणैव च पुस्तकानि प्रकाशितानीह च छद्मनाम्ना ।
येषां प्रभावेण च ब्लादिमीरः ख्यातिं गतः सम्प्रति रूसराष्ट्रे ॥५२॥

अथैकदा वै खनिकाभियोगे श्रीलेनिनः ख्यातिमुपागतोऽभूत् ।
शनैः शनैः क्रान्तिकराश्च रूसान्निष्कासिताः सद्मनि तस्य जग्मुः ॥५३॥

वृद्धिं गताः सम्प्रति पत्रसंख्याः सम्पादकीयानि च पत्रिकासु ।
सत्यां सभायाञ्च निरोधितायां गोष्ठ्यश्च तेषां विधिवद् बभूवुः ॥५४॥

पोत्रोसवो वै खलु मारतोवश् चान्ना हि पत्राणि ददुस्तमित्थम् ।
स वृत्तजातं ननु राजनीते रूसस्य सर्वं ह्यधिगच्छति स्म ॥५५॥

स्वरूसराष्ट्राद्धि बहिष्कृतोऽपि स दीनवर्गस्य च केन्द्रबिन्दुः ।
आसीज्जनेषूत्सुकताप्रणेता व्यस्तः प्रमादात् प्रमदेव भीतः ॥५६॥

रूसे तदानीं श्रमसम्प्रदायः शान्त्या दले संघटनं चकार।
न तत्र कश्चित्क्लमवान् न हीनो निरक्षरः सम्प्रति कोऽपि नासीत् ॥५७॥

श्रीव्लादिमीरः पुनरन्तिमेऽब्दे प्रकाशयामास सुयोजनां ताम्।
रूसाद् बहिः सम्प्रति पत्रमेकं प्रकाश्यमायातु च गुप्तरीत्या ॥५८॥

स निश्चिकायाथ समाप्तिकाले निर्वासनस्यास्य न वै स्वदेशम्।
गन्ता कथञ्चित् स विदेश एव स्थित्वा स्वकार्यञ्च करिष्यतीति ॥५९॥

वैधानिकी मार्क्समतस्य चैका प्रकाश्यते या नियमेन तस्याम्।
विरुद्धलेखान् खलु मार्क्सवादे निरीक्ष्य चायं नितरामखित्त ॥६०॥

शर्मण्यदेशाच्च तदैव चैकं लिलेख यत्पुस्तकमेडु-अर्डः।
इयेष यः सम्प्रति मार्क्सवादे संशोधनं वा पुनरीक्षणं स्यात् ॥६१॥

श्रीलेनिनश्चैक्यविरोधकारि दृष्ट्वा तदीयं मतमाचुकोप।
स्वयुक्तिभिः खण्डनमत्र तेषां जुघोष शीघ्रं हि करिष्यतीति ॥६२॥

सञ्चालनं मार्क्समतस्य रूसे सम्यक्तया संघटनं दलस्य।
न शक्यते स्थापयितुं कथञ्चित् पृथक्स्वरूपेण कदापि काले ॥६३॥

तेषां मतं तत्सुसहायकृद्भिः स्वक्रान्तिमार्गे प्रगतिर्विधेया।
अस्मद्दलं सम्प्रति शासनेन संघर्षकार्यं प्रकरोतु नूनम् ॥६४॥

शक्त्या विना शक्तिमतां विरोधः शुभेच्छुना नात्र कदापि कार्यः।
जयस्तु लोके खलु सच्छ्रिये स्यात् पराजयः शक्तिमतां हि शोच्यः ॥६५॥

लीनानदीसंगमसंस्थितत्वाद् एन्-लेनिनेति प्रथितः स नाम्ना।
प्रकाशितं सम्प्रति पुस्तकं तद् यत्तस्य नाम्नो जगति प्रसिद्धिः ॥६६॥

साइबेरियातः स गतो नु यूफां समाप्य निष्कासनकालमित्थम्।
तत्र स्वपत्न्याः परिरक्षणाय चकार धीरः स उपायमुच्चम् ॥६७॥

सार्धं मया मे वनिता कृपस्क्या वसेत् सदास्यास्ति मनोभिलाषः।
परन्तु न्याय्यापि तदर्थना सा न स्वीकृता राजकृताधिकारिभिः ॥६८॥

मास्कोस्थिते मातृगृहे पर सा गन्तुं यदीच्छेन्न भवेद्विरोधः।
आवत्सरं केवलमेकवारं श्रीलेनिनस्तामभिगन्तुमीशः ॥६९॥

स एकलः सम्प्रति वै प्सकोवं जगाम सद्यस्तरुणस्तपस्वी।
त्यागस्त्वपूर्वः खलु लेनिनस्य कार्यार्थिनः कष्टसहा भवन्ति ॥७०॥

आन्दोलनं यच्चलितं सवेगं पोटर्सबर्गे श्रमिणां तदानीम्।
उद्देश्यमस्यात्र च मध्यवर्गो मोच्चेन वर्गेण तु पीडितः स्यात् ॥७१॥

नेता न कश्चिच्छ्रमसाधकानां श्रेयस्करः सम्प्रति रूसराष्ट्रे।
नावश्यको वै दलसम्विभाग आसीद्धि वैमत्यममीषु शश्वत् ॥७२॥

किन्स्के पुनर्ये श्रमिणां हिताय स्वस्थापयन् वै समितिं विशालाम्।
ते भाषणादौ निरवग्रहत्वम् ऐच्छन्नुपेक्ष्यैव तु मार्क्सवादान् ॥७३॥

स्फुलिङ्गपत्रस्य प्रकाशनार्थं शर्मण्यसीमां स विवेश धीमान्।
कार्यालयस्यापि पुनर्व्यवस्थां चकार सम्पादकमण्डलस्य ॥७४॥

स्वदलतलगतो यः कोपसंवेगवह्निः
प्रशमयितुमथैनं लेनिनः सर्वयत्नैः।
रविरिव दिशि पूर्वस्यां प्रगाढान्धकारो–
न्निगरणमनसायं कोऽपि प्रादुर्बभूव ॥७५॥

इति पद्म-शास्त्रिविरचिते श्रीलेनिनामृतमहाकाव्ये "श्रीलेनिनस्य साइबेरियायां कारावासो" नाम पञ्चमः सर्गः ॥

# षष्ठः सर्गः

[ बाल्शेविकवादस्य जन्म ]

पुनरसौ निजपूर्वविचारिते गहनकर्मणि प्राप सहायताम् ।
सततशङ्कितसङ्घटनेन वै विकसिता च ततो नवपत्रिका ॥ १ ॥

प्रमुखपत्रमिदं जनतादले वितरणाय कथं सुलभं भवेत् ।
इति विचिन्त्य सुगुप्ततया हि तद् अहरहः खलु सीम्नि वितीर्यते ॥ २ ॥

कथमिदं प्रचरेज्जनतादले निखिलगुप्तचरैरभिशङ्कितम् ।
इति सदाप्रमुखैः प्रविचिन्तितं वितरणस्य विधिः कथमाप्यताम् ॥ ३ ॥

तदिदमन्यसुगुप्तनिकेतनेष्वपरपत्रमिवात्र वितीर्यते ।
यदि कथञ्चिदपि प्रतिबन्धितो विकटकष्टमसौ सहते तदा ॥ ४ ॥

निजमहत्त्वमनेन निरूपितं कृषकवर्गमनःसु कृतं पदम् ।
प्रतिदिनं ववृधे जनसंसदि पिपठिषा जनतादलसम्मुखे ॥ ५ ॥

प्रथममत्र जुघोष हि लेनिनः सततसङ्घटनेन समर्थनम् ।
प्रविभविष्यति भीतिकरं सदा प्रबलशोषकजारनिपीडिते ॥ ६ ॥

निजबलेन वयं विजिगीषवः प्रबलबर्बरवैरिकुशासनम् ।
परिविवर्तयितुं खलु शक्यते कृषकवर्गमनःसु कुतूहलम् ॥ ७ ॥

इति विचिन्त्य मुदा खलु लेनिनो विजयमाप्तुमिदं प्रभवेत् सदा ।
प्रगतिरस्य कथं भविता न वा गतिविधीनवलोकयितुं क्षमः ॥ ८ ॥

निखिलमार्क्सविचारनिवारणे नियमतः खलु याश्च निरूपिताः ।
प्रशमिताः स्वयमत्र विरोधिनां कुमतितापजुषः शठनीतयः ॥ ९ ॥

निखिलछात्रसमाजसुशिक्षणे श्रमवताञ्च विचारविवर्तने ।
जनदलेष्वपघातनिरूपणे प्रमुखकार्यविधौ रुचिमादधौ ॥१०॥

कृतमनेन सदा जनताहितं विहितमत्र दलस्य निरूपणम् ।
प्रतिदिनं जनता जनभावनां ददति नादरमद्य न लक्ष्यते ॥११॥

प्रतिदिनं जनतादलसम्मुखे निजमतस्य प्रकाशनपूर्वकम् ।
निखिलकार्यकलापविसूचनं विहितवन्ननु पत्रमिदं भुवि ॥१२॥

वितरणेन समं खलु सूचना दलसदस्यसमीपमुपागमत् ।
तदनुसारमिमे घटनास्थले निखिलबोधनकानि विमेनिरे ॥१३॥

इति विचारविमर्शपरम्परा बलवती जनतासु विवर्धते ।
प्रतिदिनं ववृधे जनतादलं दलयितुं शठजारकुशासनम् ॥१४॥

पुनरुपायशतेन विकीर्यते प्रपठनाय च वीथिषु पत्रकम् ।
श्रमिकजातिषु किञ्च विपठ्यते सुभटसद्मसु चापि वितीर्यते ॥१५॥

म्युनिखमण्डलमध्यगतो हि स स्ववसतिं विदधे जनवल्लभः ।
निजदलस्य सुकर्मणि सङ्गतः पुनरपि स्वगृहाय कृतस्पृहः ॥१६॥

मम वधूर्झटिति प्रविमोक्ष्यति कथमिवात्र तदागमनं भवेत् ।
निजदलप्रगतिञ्च विलोकयन् स्वजननिं स लिलेख सविस्तरम् ॥१७॥

स्वपतिमाप्तुमियं दलवर्त्मना श्रमिकवर्गविभूतिविधायिका ।
गतवती खलु पश्चिमयोरपं वसति कुत्र पतिर्न विवेद तत् ॥१८॥

सततसम्भ्रमणैश्चिखिदे तु सा पुनरगाद् रिटमेयरसद्मनि ।
नर उवाच शुभे ! क्व नु यास्यसि, स्वपतिमाप्तुमहं विचरामि भोः ।१९।

नृवनिता तदनन्तरमागता खलु विलोक्य नु तां भयविह्वलाम् ।
किमु भवेद् हुरमेयरकामिनीयमिति सा सुसमीक्ष्य जगाद ताम् ।।२०।।

क्षणमहो प्रतिपालय मा शुचस्तव पतिस्तवदर्शनलोलुपः ।
अनुययौ वनिता च तया समं म्युनिखमण्डललेनिनसद्मनि ॥२१॥

तमवलोकयितुं विदधे त्वरां निजपतिञ्च ददर्श नतानना।
शयनकक्षगतं खलु लेनिनं स्वभगिनीसहितं शुभमानसम् ॥२२॥

विलिलिखे च तदाशु क्रुपस्कया निजपतेर्जननीं प्रति पत्रकम्।
तव सुतः श्रमसम्भवजीवने विजयते जनतापहरः सदा ॥२३॥

अहरहः खलु शीतलवारिणि रुचिमसौ लभते ह्यवगाहने।
तुदति नाद्य नवा रुधिराल्पता सुघटितं निजविग्रहमाप्तवान् ॥२४॥

मधु-ऋतौ निजसद्मविवर्तनं प्रमुखकार्यमिदं दलसम्मुखे।
नियमतो दलपत्रविकासनं विकटकार्यमिदं क्व करोतु कः ॥२५॥

निजमतं ह्यददाद् दलसम्मुखे विकसितञ्च भवेत् खलु लन्दनात्।
नियमतो दलपत्रमिदं तदा ययतुरद्य हि लेनिनदम्पती ॥२६॥

म्युनिखमण्डलतो ययतुर्यदा हिमसितं ह्यभवन्ननु लन्दनम्।
विकटशीतवशाच्च हसन्तिकाः स्वभवनेषु जनाश्च सिषेविरे ॥२७॥

विविधकर्मसु ये निरता जनाः स्वभवने निभृता न हि निःसृताः।
जलदमध्यविलुप्तरवेः कराः करकदा ह्यभवन् खलु लन्दने ॥२८॥

सततमाङ्ग्ललिपेः पठनाय तौ स्वभवने परिलभ्य च शिक्षकौ।
अहरहः श्रमिणौ नवदम्पती नियमतो नवबोधमवाप्नुताम् ॥२९॥

प्रतिदिनं स तु पुस्तकसद्मनि ब्रिटिशसंग्रहके नियमाद् ययौ।
सदनमद्य तु मार्क्सवदस्य वै पठनकर्मणि लाभकरं ह्यभूत् ॥३०॥

नवयुवा नवलेखनकर्मणि प्रथितकीर्तिरसौ समरास्थितः।
"युवकगृध्र"पदेन विभूषितष् ट्रटसकस्तमवेक्षितुमाययौ ॥३१॥

गृहकपाटमसौ निजपाणिना नवयुवा खलु ताडयति क्रमात्।
मुहुरवेदि तदा हि क्रुपस्कया प्रतिभया निजवाग्मितया तया ॥३२॥

तदभिधानमसौ श्रुतवान् यदा परिजहाति तदा निजविष्टरम् ।
शयनकक्षगतः खलु लेनिनो युवकमद्य निगूढमलोकयत् ॥३३॥

मुहुरिमौ निजभावविचारणं चलनपूर्वकमाशु हि चक्रतुः ।
निजनिदेशमसौ प्रददाविमं वहिरयं निवसेद्धितकाम्यया ॥३४॥

निजकुशाग्रधिया भुविविश्रुतो नवयुवा दललाभविधायकः ।
खलु भविष्यति भूतलवासिनां मुहुरसौ प्रजुघोष हि लेनिनः ॥३५॥

पुनरयं स्वधिया निजमण्डले प्रमुखतामुपयातु शनैः शनैः ।
दलवरा दलकर्मणि जीवनं जुहुयुरद्य च गर्हितशंकृते ॥३६॥

कृतमनेन सुकर्म तु निन्दितो न हि कदापि सभासु च सज्जनः ।
जगति यो जनताहितचिन्तकः प्रियतमः खलु तस्य कृतेऽस्ति सः ॥३७॥

समवलोक्य नु लेनिनचेतनां जगति चेतनतापि समुत्थिता ।
प्रतिगृहं युवका बलपूर्वकं दमनमाशु हि चक्रुरिमे तदा ॥३८॥

कृषकवर्गमनःसु कृतादरा बलवती खलु लेनिनगीरियम् ।
विकसिताऽपि सिता समघोषयन् निखिलजन्तुषु राष्ट्रियगौरवम् ॥३९॥

नगरवीथिषु सम्प्रति नागराः प्रतिदिनञ्च प्रदर्शनपूर्वकम् ।
स्वविमतं खलु जारकुशासने विकटरोषमिमे व्यदधुस्तदा ॥४०॥

तदनु लेनिनपुस्तकमाययौ प्रसृतमेतदभूत् सकलापणे ।
निखिलबुद्धिभृतां श्रमजीविनां हितकरं समभून्नवपुस्तकम् ॥४१॥

निजदलस्य कृते ननु राष्ट्रियं विधिविधाननिदर्शनपूर्वकम् ।
निखिलकार्यकलापविधिक्रमं व्यविनगत्र स निश्चयपूर्वकम् ॥४२॥

सुकविकाव्यमिवास्य यशः क्षितौ सुविदितं परिवीक्ष्य समन्ततः ।
जगति चार्थविदो नहि केवलं विधिविदोऽपि च विस्मयमागताः ॥४३॥

श्रमवता सुविधा समवाप्यते कथमिहाद्य सुखादविनश्वरी ।
जगति मार्क्समतं विमतञ्च किं विशदवाग्विभवेन विवेचितम् ॥४४॥

निजविचारविधानविधित्सया पृथगिवैक्ष्य तु तत्सहयोगिनः।
स्वदललाभपराभवशङ्कया दलगताः कलहं प्रवितेनिरे ॥४५॥

पुनरिमे जनतादलविश्रुतं प्रतिभया निजवाग्मितया स्तुतम्।
स्वपदलोभवशात् खलु लेनिनं परिनिनिन्दुरघाः कुटिलाशयाः ॥४६॥

स्वमतभेदवशाद्धि यदा दलाद् अपगतः खलु स्ट्रूवमहाशयः।
तदनु तं विनिनिन्द तु लेनिनः प्रखरवाग्विभवः कुपितान्तरः ॥४७॥

नवमतं बुधडानविनिर्मितं ह्युपरितस्तु तदा खलु मेनिरे।
मनसि ते सततं कृतविग्रहाः स्वविमतानि जहुर्न विशेषतः ॥४८॥

मनसि दुःखमसावनुभूतवान् नवपुरे खलु लन्दननामके।
तदनु तत् प्रविहाय विनिर्ययौ निवसतिस्म च सेंचरसद्मनि ॥४९॥

पुनरयं प्रजुघोष तु निश्चयं दलमिदं द्विविधं प्रविभज्यते।
भवति नात्र सृतिः खलु मध्यमावनितले ननु मार्क्समते क्वचित् ॥५०॥

अपरसंघटनं विदधाति स इति रहस्यमिदं खलु वेत्ति कः।
दलसदस्यगतं निजविग्रहं न जनता दलभेदनयं विदुः ॥५१॥

मुहुरलौकिककर्मकरो हि स जगति शास्ति जनान् खलु लेनिनः।
दलगतश्चमिषु प्रतिलब्धवान् सफलतामथ सैनिकशासकः ॥५२॥

दलमिदं जनबोधनकारकं जगति शासनसूत्रखलीनकम्।
अखिलमेव भविष्यति लप्स्यते समुचिते समये समुपागते ॥५३॥

दलविभेदकमण्डलसम्मुखे निजदले भविता च परीक्षणम्।
इति विचिन्त्य दलञ्च समाह्वयन् निजदलेन समं बुधलेनिनः ॥५४॥

प्रतिनिधिः प्रथमः प्रययौ तदा मनुजशांटमनो लिखति स्वयम्।
प्रथमभाषणमस्य तदा श्रुतं तदनु तद्वशगो मनुजोऽभवत् ॥५५॥

निजमहत्त्वमसौ न जहौ तदा प्रतिदिनं प्रतिभाबलसंयुतः।
निखिललोकदले निजमण्डले ह्यमृतवर्षिकचन्द्र इवाभवत् ॥५६॥

मतविभेदमिमञ्च समीक्ष्य स प्रकुपितोऽपि सुशान्तिविचारकः ।
दलहिताय तदा जयवाञ्छको दलविधानमुरीकृतवानयम् ॥५७॥

ब्रिटिशराजनयेषु विशारदा निखिलगुप्तचरा अधिकारिणः ।
निखिलकार्यविधिं प्रसमीक्ष्य तु व्यधुरमुष्य तदा विनिवारणम् ॥५८॥

प्रतिनिधीन् हि सभा समबोधयन् न हि भविष्यति कार्यविधिस्त्विह ।
स भविता ह्यधुना खलु **लन्दन** इति जुघोष जनान् समितेः पतिः ॥५९॥

विजयलाभ इहातिसुदुष्करः सुघटितैर्बलरोधिविरोधिभिः ।
पुनरपि स्वमतस्य च पारणे बहुमतं समवाप हि **लेनिनः** ॥६०॥

तदनु **लेनिन** इत्थमिमं जयं निजदलस्य समीक्ष्य विरोधिषु ।
स्वयमिदं प्रजुघोष समन्ततः प्रहृतमेषु मयाऽऽयसमुष्टिभिः ॥६१॥

बहुमतस्य जयेन विकम्पिता मनसि रोषयुता इतरेऽभवन् ।
द्विदलसभ्यजनाश्च परस्परं विरुरुधुर्मतभेदवशात् सदा ॥६२॥

सफलतां समवाप्य हि **लेनिनः** प्रमुखपत्रविमुद्रणकर्मणि ।
निजदलीयसदःस्थजनत्रयं प्रतिनियोज जनोद्धृतिकारकः ॥६३॥

बहुमतस्य जये च सहायतां विहितवान् सततं युवकस्तदा ।
**प्लिखनवो** नयनीतिसमन्वितः समभवत् स हि लेनिनहृत्प्रियः ॥६४॥

श्रमिकवर्गसभा स्थगिता यदा तत इयाय **जिनेवपुरं** प्रति ।
दृढविचारयुतः खलु लेनिनस्तदनु **मारतवो**ऽपि च **पेरिसम्** ॥६५॥

**प्लिखनवो** ह्ययतिष्ट दलद्वयं पुनरपि प्रथितं भवतां भुवि ।
परमयं जनतादलवारणो न मनुते ह्यपरस्य निदर्शनम् ॥६६॥

**ट्रटसकी** खलु **लेनिन**मक्षिपत् प्रकटमत्र मुहुश्च कदर्थनैः ।
सुभवितव्यमिदं प्रविभाव्य वै पुनरयं प्रथितं स्वपदं जहौ ॥६७॥

मतविभेदवशादतिदुःखभाक् श्रमवशाच्छिरसि श्लथतन्तुयुक्।
अहरहः शयने तु विनिद्रितः पुनरसावभवत्सुरुजान्वितः ॥६८॥

दलमलेखि तदा हि क्रुपस्कया समधिकृत्य च लेनिनमातरम्।
ननु भविष्यति सत्वरमेव ते प्रियसुतः सकलाऽऽधिविवर्जितः ॥६९॥

स्विटजरस्य तदा ह्युपशल्यके स्वयमिमौ भ्रमतः श्रमपूर्वकम्।
सरसि संतरणाच्छयनात्तथा वपुषि लाभमसौ लभतेतराम् ॥७०॥

पुनरयं जिनवामगमत् ततः प्रमुखपत्रमचालयदुग्रकम्।
जनहिताय स सर्वहराभिधं समभवच्च जनेषु कुतूहलम् ॥७१॥

मधुऋतौ नृपजारपदातिभिर् युयुधिरे सततं जनसैनिकाः।
अधिकृतं खलु पोर्टपुरं जनैस् तदभिवीक्ष्य जुघोष स लेनिनः ॥७२॥

नृपनिरङ्कुशशासनसम्भवः श्रमिकवर्गभवो न पराभवः।
अविरत हि भविष्यति भूतले दलकृतो विजयो जनतामुदे ॥७३॥

इति दलद्वयनीतिसमर्थितः प्रचलितो विकटो जनसंगरः।
नृपनयश्च न भूतिविधायक इति विदन्ति विकासविदस्तदा ॥७४॥

प्रजा स्वराज्यश्रियमञ्जसा सदा
समाप्नुयादभ्युदयप्रयोजना।
असुप्रदानैरपि सैनिका मे
हरन्तु तापं निजराष्ट्रसम्भवम् ॥७५॥

इति पद्म-शास्त्रिविरचिते श्रीलेनिनामृतमहाकाव्ये
"वाल्शेविकवादस्य जन्म" नाम षष्ठः सर्गः ॥

# सप्तमः सर्गः

**[ जनताकृतजारशासनविरोधः ]**

द्विदलनीतिविवादवशाद् द्वये विदलिते च दलेऽथ तृतीयकम् ।
विकसितञ्च दलं नवकं तदा ह्यनुययुर्जनता जनतान्त्रिकी ॥१॥

कथरिनो निजराष्ट्रविवासितो **मइकलः** खलु कोटिपतेः सुतः ।
निखिलराजनयस्य विदांवरौ ससृजतुस्तदुभौ नरनायकौ ॥२॥

समनुयान्ति समाजजनैः सह जगति बौद्धिकतत्त्वविचारकाः ।
जनदलात् पृथगेव सुधारकावकुरुतां तु दलस्य विकासनम् ॥३॥

प्रकृतिदत्तधनं हि धराधनं भवितुमर्हति नैकजनस्य तत् ।
जनसमाजविकासनियोजितं धनमिदं जगतां सुखदं मतम् ॥४॥

जनमनःसु च राष्ट्रियचेतना शिथिलतां समियादिति शङ्कया ।
इह तु **मार्क्स**मतेन हि भर्त्सनाक्रियत सभ्यसमाजनयस्य वै ॥५॥

नगरवासिनृभिः खलु कामना प्रकटिता निजसत्त्वविवृद्धये ।
विविधवर्गभवा हि समानता पुनरियं ननु सर्वगतामियात् ॥६॥

इह जना **अपरं** तु **निकोलसं** जनदशा अवलोकयितुं प्रभुम् ।
अकथयन् स तु तेषु विमाननां प्रकटितामकरोदरुणेक्षणः ॥७॥

प्रतिभया सहितोऽपि पराङ्मुखो विघटमानविधिः स **निकोलसः** ।
निजसुहृत्सु निपात्य च शासनं भययुतो निमिमील तु चक्षुषी ॥८॥

व्यदधुरद्य सभां महतीं तदा जनदलस्य च सत्त्वसमर्थकाः ।
नृपतिरद्य विचारनिरोधने भवति नैव विभुश्च यथेप्सितम् ॥९॥

प्रथममेव नृपः स्वपराजयं युधि समीक्ष्य वधं गृहमन्त्रिणः ।
कृतमवेक्ष्य विरोधिभिराशु वै निजनयं शिथिलं विदधे बुधः ॥१०॥

तदनु गापिननामकमर्चकं निजदलस्य विधाय च नायकम् ।
श्रमिकवर्गगजारसुपोषकैर् विकसितञ्च तदा नवकं दलम् ॥११॥

परमिदं निजलक्ष्यविपूरणे सफलतां समवाप न कर्हिचित् ।
भुवि जनो विरलः फलभाग् भवत्यधिकतस्तु जनो विफलः सदा ॥१२॥

श्रमिकसङ्घटनं रविवासरे प्रमुखमद्य नियोज्य सुसज्जितम् ।
बहुजनास्त्वरितं सरमाइले नृपनिकेतनमध्यमुपाययुः ॥१३॥

निजकलत्रयुताः श्रमिका जना प्रमुखमार्गगताः शमसंयुताः ।
नृपतिना सह मन्त्रयितुं जवाच् चलितवन्त उदारहृदो रुषा ॥१४॥

नृपतिरद्य विलोक्य समागतान् श्रमिजनान् नहि संगतिमाप तैः ।
जननिवेदनबोधनहेतवे न निजमन्त्रिगणं स समादिशत् ॥१५॥

कुनृपतिः स प्रजाहितरक्षणे यतति यो न कदापि महीतले ।
सततमेव हि तस्य विमाननं जनतया क्रियते हि विजित्य तम् ॥१६॥

नृपभटा विकटा ददृशुर्यदा जनदलं पृथुलं समुपागतम् ।
शृणुत ! रे श्रमिकाः ! क्व नु यास्यथ विरमतेह रुषा च समादिशन् ॥१७॥

परमिह श्रमिणः कृतनिश्चया दलयितुं नृपदर्पमिमे क्रुधा ।
निजविचारितलक्ष्यकृते जवाच् चलितुमेव मतिं व्यदधुस्तदा ॥१८॥

निजकरेषु गृहीतभुशुण्डिभिः प्रमुखसैन्यभटैः प्रतिबोधिताः ।
श्रमिकसङ्घगणोपरि सैनिका ववृषुराशु रुषा बहुगोलिकाः ॥१९॥

विदलनेन हि सप्ततिसंख्यकाः श्रमिकवर्गजनास्तु परासवः ।
समभवन् विकलाश्च सहस्रशः क्व नु सुखं भुवने श्रमजीविनाम् ॥२०॥

इदमहर्भुवि विश्रुतिमाययौ क्षतजयुग् रविवासरनामतः ।
तदनु रूसभवाश्च महोत्सवं व्यदधुरद्य विवास्यति शासनम् ॥२१॥

जगति यः प्रथितो **रविवासरः** श्रमिकतापहरः समभूत् किल ।
मनसि तद्दिवसाद्धि मनस्विनां रुचिरभूद्दलितश्रमरक्षणे ॥२२॥

विदलिताः श्रमिका अपि सन्ति नोऽवनितले खलु सोदरसन्निभाः ।
इति विचार्य मुहुर्हि विनायका व्यदधुरस्य नृपस्य च भर्त्सनाम् ॥२३॥

नृपविधौ नृवराश्च निरङ्कुशाः समभवन् श्रमिकाश्च घृणान्विताः ।
दलितदुःखहराश्च दयान्विता मुमुदिरे हृदये श्रमपोषकाः ॥२४॥

विधिरयं विदधे परिकल्पनां व्यदधुरित्थमिमे श्रमिकाः स्वयम् ।
पुनरिमे सफलां घटनामिमां निजकृतां नियताञ्च विमेनिरे ॥२५॥

युवकवर्गभवाः श्रमिकाः स्त्रियो निजकृतं हि विरोधमसूचयन् ।
घटनया ह्यनया जनविप्लवः समजनि श्रमनीतिसमर्थितः ॥२६॥

तदनु मासमिते समये गते **सरगइश्च** जनैः खलु कर्तितः ।
प्रमुखराज्यपदस्थित एष वै दमननीतिविदामिह चाग्रणीः ॥२७॥

मरणदण्डमिता अवदन् जनाः प्रमुखशासनकल्पविचक्षणान् ।
शृणुत भो ! नृवरा नहि पश्यथ जनतया कृतमुत्क्रमणं कथम् ॥२८॥

प्रचलितां हि निरङ्कुशतां चिराद् दलयितुं भुवि जन्म नु मादृशाम् ।
ध्रुवमिमाञ्च समाप्य सुनिश्चितं जनदलं सुखमेष्यति राष्ट्रजम् ॥२९॥

पुनरितो मिलिता नवकं दलं ससृजुरेकमतेन विदांवराः ।
दिशतु नो नृपतिर्जनशासनं स्वमतमित्थमिमे तमवेदयन् ॥३०॥

स्वमतदानविधौ युवकाश्चिरान् नृपतिना ह्यधुनापि हि वञ्चिताः ।
जनतयानुमता विनता नवाः श्रमकरा इह यान्तु च संसदि ॥३१॥

तदनु **जारनृपः** सुसमीक्ष्य वै श्रमिकनेतृगणञ्च समाह्वयत् ।
जनहितार्थमतिष्ठिपदेष तु परिषदं त्वरितं हि **डुमाख्यकाम्** ३२॥

कुसमये च परामृशति स्वयं जनहिताय सभापि हि केवलम् ।
जनशुभञ्च न भूपतिना कृतं श्रमिकसङ्घटना न च तोषिता ॥३३॥

जनसुधारकृते नृपयोजना विफलताञ्च गता जनताहिते ।
कुनृपतिः क्व प्रजाहितरक्षणेऽवनितले सुचिराद्धि कदाभवत् ॥३४॥

निजपरिस्थितिभिर्विवशाः प्रजा नृपतये हि विरोधमसूचयन् ।
जनमनःसु नु शासनसंस्पृहा बलवतीह च तीव्रतराभवत् ॥३५॥

अनुदिनं खलु जारविरोधका हतसुखा इह वृद्धिमुपाययुः ।
सकलदुःखनिराकरणे प्रभुर् भवति हृद्यतमा निजतन्त्रता ॥३६॥

तदनु कान्दविकाः श्रमिकाश्च ये विपुलकर्मकरा ननु शासने ।
निजकृतञ्च विरोधमसूचयन् दलगतास्तु बहिष्करणादिभिः ॥३७॥

सकलराष्ट्रगता नृपतौ घृणा नृपमसूयति लोकदलं सदा ।
घटितदुर्घटनास्मृतिशालिन इह जनाः स्वविरोधमदर्शयन् ॥३८॥

सकलराष्ट्रगता व्यवसायिनो विपुलकर्मकराः श्रमिकास्तथा ।
असहयोगनिदर्शनपूर्वकं सकलकार्यविरोधमतिष्ठिपन् ॥३९॥

नृपतिमार्गगताः शतशो जनाः स्वयमिमे चलिता ह्यकुतोभयाः
अचलिता निजलक्ष्यपथात् सदा श्रमरता हि विरोधमसूचयन् ॥४०॥

न हि जनाः स्वविरोधमसूचयन् श्रमिककेन्द्रियसङ्घनिदेशनात् ।
स्वयमिमे श्रमनीतिसमर्थका नयबलेन सुराष्ट्रविवर्धनाः ॥४१॥

क्षतजविक्रमणाननसंस्थितं सकलराष्ट्रमिदं धरणीतले ।
स तु महासचिवो वइटाभिधः स्वमतमित्थमलं प्रजुघोष ह ॥४२॥

परिषदित्थमियं श्रमकारिणां निजविरोधनिदर्शनपूर्वकम् ।
अखिलराज्यप्रसारणसाधनं विफलतां निखिलं ह्युपनिन्यिरे ॥४३॥

इह निलम्बितमद्य जनैः स्वयं निखिलमेव हि जारप्रशासनम् ।
जनतया विहितं प्रसमीक्ष्य वै मुमुदिरे जगति श्रमसाधकाः ॥४४॥

तदनु सैन्टपिटर्ससुनामके प्रचलितं प्रथमं नवशासनम् ।
श्रमिकवर्गभवाः प्रमुखा जना दलितवर्गहितार्थमचिन्तयन् ॥४५॥

नवयुवा खलु **नोसर**नामकः प्रथम**सोवियत**प्रमुखस्तदा ।
प्रतिनिधिः सरलो विधिनीतिविज् जनतया सुवृतः श्रमपूजकः ॥४६॥

परिषदित्थमियं प्रजुघोष वै श्रमयुता इह भाविनिसंकटे ।
सुदृढसङ्घटनेन च तिष्ठत ! यदिह वो भविता विधिनिर्णयः ॥४७॥

श्रमिकभाग्यमिदं धरणीतले बलमुपैष्यति सङ्घटनेन वै ।
अपि च सङ्घटनेन पिपीलिकाः प्रभुमपि प्रशृणन्ति महोरगम् ॥४८॥

श्रमदले खलु **ट्रॉटसकी** युवा नयनिदर्शनमात्रसहायकः ।
अतिकलायुतभाषणदाक्ष्यतः प्रमुखसङ्घपदञ्च नु शिश्रिये ॥४९॥

दलमिदं खलु **सोवियतं** क्षणात् प्रसृतमाशु पुरीषु समन्ततः ।
स्वयमुपाययुरस्य जना मुदा श्रमिकवर्गगताश्च सदस्यताम् ॥५०॥

जगति प्राप यशः समितिर्यदा तदनु राजनयस्य प्रचारिका ।
प्रमुखनायकशक्तिविधायिनी समभवन्निजराष्ट्रनयेषु सा ॥५१॥

निजनिदेशबलेन तु जित्वरी श्रमिककर्मकरेषु मता हि सा ।
श्रमिकवर्गजनान् निजकर्मणि तदनु षष्टिदिनान्यरुणत्समान् ॥५२॥

ध्रुवमियं श्रमिवर्गनिलम्बने सफलतां समवाप परन्त्विह ।
नृपकुशासनजन्यरुषागमो द्विगुणिता ह्यभवज्जनमानसे ॥५३॥

नृपसभासचिवाश्च भयान्विताः क्रमणमुग्रमुदीक्ष्य नृणां तदा ।
उचितमत्र भवेज्जनशासनं जनतयाऽनुमतं समबोधयन् ॥५४॥

**विलियम**स्तु दिदेश नु **बलिने** निजपितृव्यसुतं जनताहिते ।
जनमनःसु च राष्ट्रियभावना बलवतीह विलोक्य विदांवरः ॥५५॥

नृपतिराशु हि गच्छतु **जर्मनीम्** इह स आप्स्यति शोभनमाश्रयम् ।
**विलियम**स्य मतं प्रसमीक्ष्य वै विकलता खलु राजगृहेऽभवत् ॥५६॥

नयविदां प्रमुखो ननु **वाइटो** निजविरोधिमतं समवेदयत् ।
नृपतिजारविनिर्गमनेन वै सुविदितः खलु तस्य पराजयः ॥५७॥

इह विलम्बभयाच्च **निकोलसः** प्रमुखमन्त्रिणमेव पदच्युतम् ।
विहितवाँश्च नवं खलु **वाइटं** जनहिताय नियुक्तमथाकरोत् ॥५८॥

जनपदेषु ददौ निजतन्त्रतां जनसभाभ्य इति प्रविचार्य सः
जनसुशासनतो जनसंयमः सुनियतं भविता निजराष्ट्रके ॥५९॥

प्रथमतस्तु जने निजतन्त्रता प्रतिनिधीञ्जनता तु विचेष्यति ।
तदनु संभवताद् नवजीवनं निजमतं प्रजुघोष **ट्रिपोवकः** ॥६०॥

ननु मिलेन्न च वा नवशासनं ह्यपगता न निरङ्कुशता भवेत् ।
जनहितं सुकृतं च भवेन्न वा **ट्रटसकी** प्रजुघोष निजं मतम् ॥६१॥

प्रचलितं पृथुलञ्च प्रदर्शनं श्रमिकपक्षभृतां हि विरोधकृत् ।
नृपभटा मिलिता न हि केवलं निजविरोधमिमे समदर्शयन् ॥६२॥

इह निरङ्कुशतां हरतु प्रजा नयतु विद्रुहपाणिषु खड्गकम् ।
श्रमिकवेतनवृद्धिरपेक्ष्यते तदनु **सोवियतं** प्रजुघोष ह ॥६३॥

जलभटा अपि विद्रुहतां गताः परमिमे दमिता नृपनायकैः ।
प्रमुखनेतृगणो वधशङ्कया मनसि वेपथुमाप प्रशासने ॥६४॥

इह नु चास्थिरता प्रविलोक्यते सुघटितेऽपि च **जार**प्रशासने ।
श्रमिकवर्गमनःसु च विप्लवो विकृतिमाप पुनर्नु प्रशासने ॥६५॥

निजविरोधविधायिनिघोषणां विहितवन्त इमे ह्यविशंकिताः ।
सफलताञ्च समीक्ष्य नु **वाइटेः** श्रमिकमध्यगतो विनयाज्जगौ ॥६६॥

श्रमिकवर्गजनाः शृणुतेह भो ! वदति वो ह्यनुजश्च कृताञ्जलिः ।
कृतविरोधमपास्य च कर्मणि व्रजत कर्मकरा मम सोदराः ॥६७॥

निजकलत्रजनेषु कृपान्विताः शृणुत मे वचनं ह्यविशङ्किताः ।
अहमयं भवतां हितचिन्तको विनयमेव करोमि कृताञ्जलिः ॥६८॥

परिषदा पुनरुत्तरितं क्षणात् समितिरद्य नु विस्मितिमाययौ ।
प्रमुखमन्त्रिमुखात् प्रथमं श्रुतो ह्यनुजशब्दयुतो ध्वनिरद्य वै ॥६९॥

न हि विलोकयत एष नु वाइटेर् दलितवर्गनृणां हितचिन्तकः ।
नृपतिजारहिताय कृतश्रमश् छलयति श्रमिकानिह धूर्तराट् ॥७०॥

गदितवन्त इमे जनसंसदि श्रमिजनाः खलु तस्य तिरस्क्रियाम् ।
व्यपगते च निरङ्कुशशासने निखिलमेव हि राष्ट्रहितं भवेत् ॥७१॥

श्रमिकवर्गगता गृहिणस्तदा निजदशामवलोक्य दयावहाम् ।
भवतु जारकुलस्य वधोऽथवा श्रमिकुलस्य तदा निरचिन्वत ॥७२॥

सधननिर्धनलोककुलस्थितिर् जनहिताय न सुस्थितिमागता ।
नृपनयेन निरङ्कुशता चिरान् निरवधिर्निदधे स्वपदं खलु ॥७३॥

नृपतिरद्य विलोक्य नु विप्लवं नृपदशाञ्च निभाल्य प्रजास्ततः ।
उदधिभङ्गसमाहतनौ स्थिता इव भयं सततं प्रतिपेदिरे ॥७४॥

जनहितगतिनिर्माता त्राता दारिद्र्यतापतप्तानाम् ।
कर्तुं निजकर्तव्यं प्राप चिराल्लेनिनो देशम् ॥७५॥

इति पद्म-शास्त्रिविरचिते श्रीलेनिनामृतमहाकाव्ये "जनताकृत-
जारशासनविरोधो" नाम सप्तमः सर्गः ॥

# अष्टमः सर्गः

[ बाल्शेविकदलस्य विजयः ]

नीतिविल्लेनिनश्चायं स्वदेशं प्रति निर्वृतः ।
एतावद्दिनपर्यन्तं क्वासीन्नेमे हि मेनिरे ॥ १ ॥

नेदीयासञ्च विद्रोहं मत्वा सङ्घस्य कोविदः ।
मेनशेविकहस्ताद्धि शक्तिं जग्राह वै जवात् ॥ २ ॥

लेनिनश्चैप्रिले मासे स्वदलस्यानुयायिनाम् ।
सभामाकारयामास लन्दने खलु पाक्षिकीम् ॥ ३ ॥

स्वकार्यक्रमनिर्माणे न विलम्बो न वा श्रमः ।
नाभूत्तेजस्विनां लोके कृतं व्यर्थं कदाचन ॥ ४ ॥

लेनिनन्निजनेतारम् अमन्यन्त जनाः क्षणात् ।
तस्मै दत्वाधिकारं वै सदस्याश्च सुनिर्वृताः ॥ ५ ॥

तात्कालिकञ्च विद्रोहं सशस्त्रं सम्भवेदिह ।
तत्कृते सङ्घनीतिं स जुघोष श्रमपूजकः ॥ ६ ॥

मेनशेविकवादस्य विरोधं कृतवानयम् ।
यतः सम्यग्विजानाति तद्दलस्य नयं स्वयम् ॥ ७ ॥

बालशेविकसङ्घस्य सभेयं प्रथमा नवा ।
श्रूयते, विजयश्चास्य मेनशेविकवादिषु ॥ ८ ॥

काजानस्य युवा ह्येको लेनिनञ्चेह पृष्टवान् ।
स्वदलस्य समादेशः कर्तव्यञ्चात्र कथ्यताम् ॥ ९ ॥

कार्यमेकं हि नः कार्यं राष्ट्रे तावन्निरन्तरम् ।
विद्रोह एव तत्कार्यं स कर्तव्यो निरन्तरम् ॥१०॥

साभायां लेनिनो ब्रूते व्यामोहे न वयं रताः ।
सत्यं तु भविता लोके साम्प्रतं न जयश्च नः ॥११॥

जनानान्निर्धनानाञ्च विद्रोहेण विना चिरम् ।
न निरङ्कुशता चास्माद् विनष्टा सम्भविष्यति ॥१२॥

जारशासनदग्धानाम् अशक्तानां विनिर्णये ।
सङ्घशक्तिबलाद् देशे सुकृशाश्च भृशा वयम् ॥१३॥

नास्माकं विजयो भावी कथयन्ति भयद्रुताः ।
लोके नैतादृशैः क्वापि विजयश्रीरवाप्यते ॥१४॥

सङ्घटास्त्रसमावाप्तिः सेना क्रान्तिविधायिनी ।
एतावल्लेनिनोद्देश्यं राष्ट्रे नृपतिमृत्यवे ॥१५॥

विदेशेभ्यः स्वदेशे स शस्त्राण्यानेतुमुत्सुकः ।
सैनिकेषु च विद्रोहभावनां भावयन्सुधीः ॥१६॥

दलसङ्घटनेनायं ह्यभिषेणयितुं जवात् ।
प्रयत्नं कृतवान् यस्मात् सङ्घे शक्तिः कलौ युगे ॥१७॥

श्रमिकाणां दलं शीघ्रं सर्वत्र स्यात्प्रशिक्षितम् ।
शस्त्रैः सुसज्जितं तीक्ष्णैः प्रक्षेपणसमन्वितम् ॥१८॥

बमानां निर्मितिः षट्सु मासेष्वपि न साधितम् ।
न च वार्तादिभिः कार्यं सेत्स्यतीति च सोऽवदत् ॥१९॥

निर्लुण्ठ्य नृपतेः कोषान् चराणाञ्च विहिंसनम् ।
बलिदानशतं कृत्वा जनराज्यमवाप्यते ॥२०॥

बलिदानसमुद्भूता नेतारो लक्षसंख्यकान् ।
दलितानुद्धरिष्यन्ति श्रमिकान्नात्र संशयः ॥२१॥

क्रान्तिबीजानि सर्वत्र क्षिप्त्वा स्वयमलक्षितः।
कृषिवल् लेनिनः शश्वच् श्रमवार्भिरसेचयत् ॥२२॥

नोवियाजेजिजे पत्रे स्वविचारान्प्रकाशयन्।
लेनिनश्चेतसि क्षिप्रं सन्तुष्टिं नाभजत्पराम् ॥२३॥

स्वं कालं यापयामास पत्रकार्यालयस्थितः।
गुप्तरूपेण विद्रोहभूमिका निर्मितौ सदा ॥२४॥

एलिजाबेथ के० नाम्नीं पान्थावासमुपागताम्।
फ्रेनाम्ना गुप्तवेषेण लेनिनो द्रष्टुमभ्ययात् ॥२५॥

अवोचद्धनिकां भद्रे ! कुरु मेऽद्य सहायताम्।
यद् गुप्तसमितेर्योग्यं वर्तते त्वन्निकेतनम् ॥२६॥

सप्ताहे स द्विवारं हि कर्तुं शक्नोति संसदम्।
मद्गृहे, स्वीकृतिं दत्वा परं हर्षान्विताभवत् ॥२७॥

स्वसेविकाञ्च निष्कास्य संकेतार्थप्रभाषिणः।
जनान् प्रावेशयन्नित्यं गुप्तरीत्या सशङ्किता ॥२८॥

भोगान् भोक्तुं न संयोक्तुं सभां गुप्ताञ्च लेनिनः।
वस्तुतस्तु चकारायं तया सार्धं हि मित्रताम् ॥२९॥

सोऽपि नो तत्कृतां सेवां विसस्मार कदाचन।
नहि सन्तः कृतं लोके विस्मरन्ति हि कर्हिचित् ॥३०॥

यदा कदा स एकाकी तन्निकेते श्रमान्वितः।
संगीतं गातुकामो हि प्राप्तवानविशङ्कितः ॥३१॥

बीथोविनस्य गीतं हि गायं गायं प्रहर्षितः।
गानेनानेन सार्धं वै गीतांशानि स्मरत्ययम् ।३२॥

ध्यानमग्न इवाभूत् स तद्व्याजेन विदांवरः।
यहूदीसोसलिज्मस्य ध्वनिं शुश्राव नित्यशः ॥३३॥

उद्योगपतयो गत्वा जारभक्तं **निकोलसम्**।
प्रार्थयाञ्चक्रिरे नम्राः श्रमिणां दमनाय तु ।।३४।।

स्थानेषु च विभिन्नेषु सैनिकेषु जनेष्वपि ।
विद्रोहो विस्तृतश्चासीन् न परं सुनियोजितः ।।३५।।

**रूसे सोवियतः** शीघ्रं जुघोषान्दोलनाय वै ।
सिंहासनविनाशाय सर्वकारस्य सम्प्रति ।।३६।।

तत्कार्यसमितेः सर्वे सदस्याश्च निरोधिताः ।
पत्राण्यपि निरुद्धानि विरुद्धानि पदे पदे ।।३७।।

दलं निर्मापयामासुर् जनानां पञ्चविंशतिः ।
सशस्त्रद्रोहकार्ये तु सन्नद्धा, **बोलशेविकाः** ।।३८।।

**सैन्टपीटर्सबर्ग**स्तु द्रोहपक्षे न साम्प्रतम् ।
**लेनिनस्य** परं **मास्को**राशाकेन्द्रं महीतले ।।३९।।

यदा **दिसम्बरे** मासे विद्रोहोऽभूद्धि विंशके ।
**मास्को**नगरवास्तव्याः सन्नद्धाश्च चतुर्दिशम् ।।४०।।

सूचनार्थं प्रपत्राणि **मास्को**नगरभित्तिषु ।
येषु विद्रोहप्रारूपं स्पष्टतः पर्यलक्षत ।।४१।।

क्रान्तेर्ज्वाला विवेशाथ **मास्को**नगरवासिषु ।
आसप्ताहं नृभिर्द्रोहकारिभिर्मर्दितं पुरम् ।।४२।।

शतघ्न्याद्यस्त्रसंभार-युक्तया सेनया ततः ।
नूनं निर्मूलतां नीतो विद्रोहो द्वादशे दिने ।।४३।।

**लेनिनस्तु** तदातिष्ठत् **फिन्लैंडे** स्थिरमानसः ।
विस्फोटं द्रोहजातस्य श्रुतवान् वै क्षणे क्षणे ।।४४।।

विद्रोहं विफलं ज्ञात्वा सदस्या **बोलशेविकाः** ।
सर्वप्रथमतो ह्येते निनिन्दुर्**लेनिनं** भृशम् ।।४५।।

चिरात्प्रचलिता क्रान्तिर् विनष्टा व्यर्थताङ्गता ।
लेनिनः श्रमिकाणाञ्च रक्तधाराप्रवाहकः ॥४६॥

सारहीनदुराशेपांश्चिक्षिपुश्चारुणेक्षणाः ।
लेनिनस्तु परं तत्त्वं विजानाति विचक्षणः ॥४७॥

निकोलसस्तु साफल्यं प्राप्तोऽपि हृदि शङ्कितः ।
स्वदेशे श्वस्तने वाद्य न जाने किं भविष्यति ॥४८॥

उदारवादिनो देशे डूमाशक्तिबलेन च ।
संवैधानिकतन्त्रस्य स्थापनार्थं सुसज्जिताः ॥४९॥

डमा निर्वाचने रक्ताः संसक्ता मेनशेविकाः ।
लेनिनेन विरोधं हि व्यदधुस् तस्य संसदि ॥५०॥

क्रान्तिस्तु पश्चिमे पूर्वं भविष्यति जुघोष सः ।
सर्वत्र श्रमिकैः सार्धं धनिका द्रोहकारिणः ॥५१॥

स्टाकहोमस्थले न्यस्तं सुगुप्तमधिवेशनम् ।
यत्राभूद् दलयोः सम्यग् एकताया निबन्धनम् ॥५२॥

यदि केन्द्रसभा रूसे सत्यं बहुमते स्थिताः ।
तर्हि चापनता नित्यं राष्ट्रे वै मेनशेविकाः ॥५३॥

वयं न स्मोऽनुगन्तारो राष्ट्रे वै मेनशेविकान् ।
अत्रेत्थमनयोर्जातः कर्गजेषु समन्वयः ॥५४॥

केन्द्रीयसमिती रूसे तदाल्पमतसंस्थिता ।
नावाग्रो नाधिसंयुक्तः परमासीत्तु लेनिनः ॥५५॥

सुश्री के० ह्यमिलत्तेन स्टाकहोमस्थले तदा ।
स्वीडिसेन समं सात्र ससुखं समुपागता ॥५६॥

जार्जियाभूमिवास्तव्यौ वस्तून्याक्रेतुमिच्छुकौ ।
प्राहतुर्व्लादिमीरं तौ कथं यन्त्रं प्रयुज्यते ॥५७॥

लेनिनः प्राह के० नाम्नीं प्रतिनिध्यमुपागतौ ।
काकेशिया-प्रदेशस्य प्राप्तावेतौ सदःसखौ ॥५८॥

व्यस्तं प्राप्तावकाशं तं सा ब्रूते सरसीतटे ।
नाविकश्च कथं नाभूस् त्वं कथं वा न धीवरः ॥ ५९॥

पुनर्वर्षद्वयेऽतीते पेरिसे तां समागताम् ।
लेनिनः प्राह कस्मात्त्वम् अत्राऽऽयातासि शोभने ! ॥६०॥

रूसे बलवती जाता पुनः स्वातन्त्र्यभावना ।
डूमया भयभीतश्च जारः सम्प्रति लक्ष्यते ॥६१॥

मारोजोवस्तु लक्ष्मीवान् मास्कोकोटिपतिस्तदा ।
विजानाति विचारज्ञो लेनिनं दूरदर्शिनम् ॥६२॥

शस्त्रनिर्माणकार्येषु गोर्कीपत्नीकृते तदा ।
साहाय्यमकरोच्चायं रूबलैश्च सहस्रशः ॥६३॥

दलमेतद् घृणाश्चर्यम् उत्पादयति नित्यशः ।
लघुश्रमिकवर्गेषु विरोधिकदलेषु च ॥६४॥

उदारवादिनां रूसे जयः समजनि क्षणात् ।
सर्वकारः पराजिग्ये निर्वाचनविधौ भृशम् ॥६५॥

श्रीलेनिनादयः सभ्याः प्लीखानोवश्च गोर्किकः ।
क्रासिनश्च वराश्लोवः सर्वे लन्दनमाययुः ॥६६॥

चरः शोरनिकोवाख्यो दलेऽभूच्छद्मरूपभृत् ।
तदिङ्गितेन सर्वेऽपि सदस्यास्तु निरोधिताः ॥६७॥

डूमा भग्नाभवच्छीघ्रं द्रोहारोपेण सम्प्रति ।
कठिनो ह्यमिलत्तेभ्यः कारावासश्च सश्रमः ॥६८॥

दले पूर्णाधिकारश्च जातो ह्यस्मिन्निसर्गतः ।
बोलशेविकनिष्ठानां श्रमिकाणां समन्ततः ॥६९॥

लेनिनस्य विचारेण दलस्य क्रान्तिभावना ।
श्रमिकेषु समस्तेषु चिरस्थायित्वमागमत् ॥७०॥

सैन्टपीटर्सबर्गेऽयं कठिनञ्च स्वजीवनम् ।
वीक्ष्यात्यन्तं प्रखिन्नोऽभूत् तस्माद् भूमिगतोऽभवत् ॥७१॥

क्रुपस्कया स्वपतिं रात्रौ समन्ताद् व्यचिनोत् सती ।
फिनलैण्डं पुनः प्रापल्लेनिनो विदिताशयः ॥७२॥

कृषकाः श्रमिकाणाञ्च साहाय्यार्थं समागताः ।
क्रान्तिमेते विधास्यन्ति नूनं श्रमिजना इह ॥७३॥

अनिद्रया रुजात्यन्तं रुग्णोऽत्र स्थातुमक्षमः ।
स्टाकहोमं पुनर्गन्तुं मतिं चक्रे विदांवरः ॥७४॥

मनसि चात्मजयन्तु पराजयं
विदितवानभयोऽपि भयान्वितः ।
जगति पूर्णजयेन विना कथं
मतिमतां सुकृतां क्व सुखं नृणाम् ॥७५॥

इति पद्म-शास्त्रिविरचिते श्रीलेनिनामृतमहाकाव्ये
"बाल्शेविकदलस्य विजयो" नाम अष्टमः सर्गः ॥

# नवमः सर्गः

## [ लेनिनस्यान्तर्दलीयसंघर्षः ]

**लेनिनः** प्राप सर्वाधिकं सङ्कट वीक्ष्य वै नोज्ज्वलां क्रान्तिसम्भावनाम् ।
वह्नितप्तः सुवर्णो नृभिः कथ्यते सङ्कटेनैव ना मानवो जायते ॥१॥

**लन्दने** या हि संसत् समायोजिता सा विरुद्धाभवल्लेनिनाय ध्रुवम् ।
अस्त्रनिर्माणकार्यं वृथाऽभूदिह क्रान्तिरित्थं भविष्ये न संपत्स्यते ॥२॥

द्रव्यशक्त्या विना शस्त्रलाभः कथं शस्त्रहीनैर्जयश्रीः क्व सम्प्राप्यते ।
कीर्तिमान् नायकश्चैव सम्पूज्यते राज्यसञ्चालनं क्वाश्रिया सम्भवम् ॥३॥

**सैन्टपीटर्सबर्ग**स्थितं यद्दलं तस्य सञ्चालनं वै चकार तौ ।
तद् व्ययार्थं स लक्षाधिकं **रूबलं** प्राप्तुमुद्योगवान् नायका **लेनिनः** ॥४॥

राप्रदाता यथा **मैक्सिमो गोरकी जारिन**श्चापि विज्ञानवेत्ता महान् ।
**ईब्सकीमोरजोवामिखोला**दयश् चक्रुरित्थं भृशं तस्य साहाय्यकम् ॥५॥

लुण्ठितं **तिपिलस**स्येह पत्रालयं क्रान्तिकारैरिदं वीक्ष्य **बोल्शेविकैः** ।
यज्जना उत्थिताः स्युः स्वराष्ट्रेऽधुना निर्वहेत् सङ्घकार्यं च कष्टं विना ॥६॥

**बर्लिन-म्यूनिखौ** फ्रांसदेशे पुनर् दीर्घकाले व्यतीते हि सम्प्रापतुः ।
**मैक्सिमो** लिट्विलोवस्तथा **पेरिसे** सर्व एते विदेशेषु वै बभ्रमुः ॥७॥

**जर्मनो**ऽसर्वकारस्तथा **फ्रान्सजो रूस**राष्ट्राभियोगस्थितांल्लुण्ठकान् ।
तस्करान् राज्यविध्वंसकान् हिंसकान् दण्डयोग्यान्न दण्डाय तस्मै ददुः ॥८॥

कार्यनिष्ठश्च **कोवा-जुगाशेवली** छद्मनामान्वितोऽयं युवा **स्टालिनः** ।
गुप्तषड्यन्त्रकार्यस्य सञ्चालकः सैष आसीन्महानायको **रूसजः** ॥९॥

उग्रकार्यप्रबन्धे सदा चाग्रणीः स्टालिनस्तद्दलादेव निष्कासितः।
क्रान्तिसम्पोषको गुप्तरीत्या परं लेनिनः प्राप पूजां दले साम्प्रतम् ॥१०॥

निर्भरं प्लीखनावस्तु खेदं ययावित्थमेषां समाकर्ण्य कार्यं तदा।
सङ्घतः पूर्णनिष्कासनं सम्भवेत् पूर्णसम्बन्धहानिस्तु बोल्शेविकैः ॥११॥

भर्त्सना वापि तीव्रा समालोचना लेनिनेन श्रुता संजुघोषाथ सः।
नो वयं लुण्ठका नैव विध्वंसकाः कालचक्रं हि सर्वं करोति ध्रुवम् ॥१२॥

क्रासिनः पूर्णरूपेण मुक्तोऽभवद् बर्लिनं प्राप्य सेवां चकार व्रती।
विक्टरश्चाऽऽययौ गुप्तरीत्या पुनर् वित्तभागे पदं प्राप बोल्शेविके ॥१३॥

सच्मिदीतस्वसा कैथरीन्नामिका लेनिनस्य प्रयत्नेन चोद्वाहिता।
गुप्तरीत्या नु बोल्शेविकेभ्यस्तदा ह्येकलक्षं हि तद्रूबलं वै ददौ ॥१४॥

विक्टरं लेनिनो बुद्धिमाँल्लुण्ठकं प्राह तस्मै स साहायकं दत्तवान्।
तन्मतेनात्र सङ्घे विभिन्ना जना भिन्नकृत्यैर्दलं पोषयन्ति द्रुतम् ॥१५॥

मैक्सिमोगोरकीरोजकोवादयो लेनिनस्याऽऽग्रहाद्वै दलान्निर्गताः।
सङ्कटे संशयापन्नचेताः पुनर् ब्लादिमीरो बभूवैकलः कृत्यधीः ॥१६॥

रूसराष्ट्रे युवानश्च विद्यार्थिनो लेखका बुद्धिमन्तस्तथाऽऽलोचकाः।
जारजाले निबद्धाश्च जारस्तुतिं चक्रुरित्थं श्रमस्येह सम्पोषकाः ॥१७॥

राष्ट्रवर्गस्थितिं वीक्ष्य दुःखार्दितो लेनिनोऽयं जिनेवां ययौ साम्प्रतम्।
प्रोलतार्याख्यपत्रस्य संपादने ख्यातनाम्नः स चासीत् पुनर्व्यस्तिभाक् ॥१८॥

लेनिनश्चात्र संदेहकालेऽधुना स्वस्थितिं वीक्ष्य चित्राञ्च दोलायते।
चिन्तया युक् स पत्नीमुवाचैकदा मृत्युहेतोरहं किं वृथात्राऽऽगतः ॥१९॥

शीतकाले च प्राप्ते ययौ पेरिसं तत्र सम्यक्तयोवास ग्रन्थान् पठन्।
शान्तिपूर्णाय तज्जीवनायाधुना योग्यपत्नी क्रुपस्कया हि दध्यौ सदा ॥२०॥

पूर्णसंकल्पदाढ्यं दलस्यारिभिः सन्धियत्नप्रयत्नान्न कुर्वन्नसौ।
क्रान्तिमिच्छन् स्वराष्ट्रस्य सम्भूतये स्वप्नवान् सर्वकालं स्वराज्यव्रती ॥२१॥

**लेनिन**श्चैकलः सङ्घसम्भेदको दुष्टवद्दर्पितश्चात्र दुष्टाशयः।
क्रोधयुक् रूक्षवक्ताभिमानी भृशञ् चेत्थमाचिक्षिपुस्तं सदस्याः सदा ॥२२॥

सङ्घनिष्ठात्मतन्त्राधिकारं तदा दत्तवान् सर्वकारो हि रूसेऽधुना।
सङ्घशक्त्या युता निर्धना ये जनाः पारतन्त्र्यप्रतप्ताः सुहृष्टास्तु ते ॥२३॥

**सैन्टपीटर्सबर्ग**स्थिता निर्धना धातुकर्माणि कुर्वन्त एवं जगुः।
**लेनिनो रूस**राष्ट्रस्य नेता महान् नास्ति चान्यः सुमान्यः सुधीस्तादृशः ॥२४॥

**मालिनोव्स्की** हि निर्वाचितस्तद्दले तीव्रबुद्धया स्वसम्भाषणेनाथवा।
तस्य साहाय्यकारा न मुक्ताः परं **मालिनोव्स्को** तु मुक्तोऽभवद् बन्धनात् ॥२५॥

**लेनिन**श्चात्र नक्षत्रपत्रेऽधुना राजनीतेर्विचारानलेखीत् सुधीः।
शक्तिमान्नास्ति पूर्वं यथा धीरणीर् जीवनस्यार्धनायुर्व्यतीयाय सः ॥२६॥

शीर्षपीडाऽप्यनिद्रा कुरोगद्वयी शक्तिहीनं चिकीर्षुर्महामानवम्।
राष्ट्रभक्ताः स्वदेहेन सार्धं सदा मृत्युना संवृताः, मृत्यवे जीविताः ॥२७॥

शोणितेनैव शश्वत् स्वराष्ट्रध्वजं रञ्जयन्तः प्रजापादपं सर्वतः।
दुःखदावानलेनैव तप्ता भृशं सार्वभौमं प्रशस्तं शरीरं सताम् ॥२८॥

नश्वरेणापि देहेन शुभ्रं यशः प्राप्यते लेशमात्रं न वै संशयः।
कीर्तिमन्तः शरीरे विरक्ताः सदा यच्छरीरं चितायां तु सन्दह्यते ॥२९॥

संङ्घशक्तौ प्रभुत्वस्य संभावनां वीक्ष्य चाऽऽशान्वितो **लेनिनः** साम्प्रतम्।
गुप्तवेषांश्चरान् प्रैषयत्सत्वरं रूसराष्ट्रे स्वनीतिप्रचाराय वै ॥३०॥

**स्टालिनो** गुप्तरूपेण **रूसे** तदा वर्धयामास **बोल्शेविकानां** दलम्।
शीघ्रमस्मद्दलस्य प्रभावो महान् वोभवीतीति सोऽसूचयल्लेनिनम् ॥३१॥

तत्र **लीनास्थले** स्वर्णभूमौ तदा निर्धनाः स्वं विरोधं समालोकयन्।
**जारसैन्यै**र्भृशं निन्दितास्ताडिता निग्रहं प्रापिताः सार्धलक्षद्वये ॥३२॥

छद्मनामान्वितः क्रान्तिदर्शी युवा **स्टालिनः** स्तालिन राष्ट्राच्च निष्कासितः।
**प्रावदा** प्राचकाशत्तदा **लेनिनो मालिनोव्स्की** बभूवास्य सम्पादकः ॥३३॥

**ट्रायनोव्स्की** मतं स्वं जगादाधुना **मालिनोव्स्की** विरोधी दलस्यास्ति वै।
उत्तरे **लेनिन**स्यास्य संभर्त्सनां प्राकरोत्तेन भीताः सदस्याश्च ते ॥३४॥

**स्टालिन**श्चात्र संगीतसम्मेलने **सैन्टपीटर्सबर्गे** गृहीतोऽधुना।
जारसेनाधिपैर्दुर्मदैः सर्वतश् चावृतोऽयं नृसिंहोऽभवद्दुर्दमः ॥३५॥

खिन्नचेताः सदस्यान् समाकारयत् सार्थभ्रष्टान्नवीनांश्चरान् पामरान्।
**लेनिनो मालिनोव्स्कीं** नवीनं दलं स्थापनार्थं हि प्रायुङ्क्त **रूसे** तदा ॥३६॥

**प्रावदा**-पत्रमध्येऽलिखन्निन्दनं चात्र **मेन्शेविकानां** सुधीर्लेनिनः।
**रूस**राष्ट्रस्थनिःस्वैः कृतस्याधुना सर्वनाशः कृतस्त्वेभिरित्याह सः ॥३७॥

सर्वकारेण **मेन्शेविकानां** दलं खण्डितं **मालिनोव्स्की**ङ्गितेन ध्रुवम्।
ख्यातनामाभवन्नायको बुद्धिमान् राष्ट्रपो निर्धनानाञ्च लोकप्रियः ॥३८॥

त्यागपत्रं ददौ **मालिनोव्स्की** तदा पत्रमेकं लिलेख द्रुतं **लेनिनम्**।
निर्गतो **जार**नीतेरहं निश्चितं किन्तु **बोल्शेविकानां** परं सेवकः ॥३९॥

**मालिनोव्स्की** विरोधेन तप्तो भृशं संसदा **लेनिनः** प्राह पत्रेऽधुना।
**मालिनोव्स्की** रणे मृत्युमाप्तस्तथा शोकपत्रं सदस्यैर्बहिः सारितम् ॥४०॥

**लेनिन**स्याप्यरीणां मतं साम्प्रतं लौहसङ्कल्पवान् सुव्रती मानवः।
रक्तजक्रान्तिजन्मप्रदातास्त्ययं **मार्क्सवादी** महान् वाथ दुःसाहसी ॥४१॥

**रूस**राष्ट्रे श्रमस्य प्रतिष्ठापकः सिद्धहस्तो युवा सङ्घसंभेदकः।
कार्यजातं हि यस्यास्ति मिथ्याश्रितं पूर्णरूपेण धिक्कारयोग्यस्त्वयम् ॥४२॥

**प्लीखनावो** जुघोषैकदा मण्डले **लेनिन**स्य प्रभावेण चैक्यं कुतः।
**लेनिनः** संङ्घभेत्ता तथोत्तेजकः संङ्घशक्तिप्रणाशाय पूर्णोद्यतः ॥४३॥

**सैन्टपीटर्सबर्गा**धिवेशे पुनर् **लेनिन**स्य प्रभावोऽभवत् सर्वतः।
कः समर्थो विरोधे हि तेजस्विनां यद्यपि प्रत्नसंङ्घे न लोकप्रियः ॥४४॥

**जून**मासे **क्राकाव**सम्मेलनं निश्चितं भावि **बोल्शेविकानां** सताम्।
कालचक्रे निरुद्धं जगत्सर्वतो विश्वयुद्धेन तस्यावरोधः कृतः ॥४५॥

**लेनिनो** दृष्टवान् विश्वयुद्धस्य वै किं फलं बोभवीतीति निश्चप्रचम् ।
**आष्ट्रिया-रूसयुद्धेन** वै पश्चिमे **योरपे** क्रान्तिसम्भावना वर्धिता ॥४६॥

**आष्ट्रिया-रूसयोर्भर्त्सना जर्मने**ऽकारि लोकैरतः स्याद् विरोधो महान् ।
आकलय्येति शङ्काकुलो **लेनिनो** बद्धमौनस्तपस्वीव संदृष्टवान् ॥४७॥

आहवस्यात्र रोधेन **जारस्य** किं किञ्जयः स्यान्न लोकापकारक्षमः ।
संङ्गरारम्भकाले यतश्चाऽऽष्ट्रिया-रक्षकाश्छद्मवेशान्विता बभ्रमुः ॥४८॥

मां **कराकाव**रक्षाधिपा जानते **जारशत्रुं** विशेषेण वै दुर्दमम् ।
नाहमत्रागतश्छद्मवेशान्वितो **रूसभू**-साम्यदृक् पार्षदेष्वग्रगः ॥४९॥

**एड्लरस्य** प्रयत्नैर् निबद्धोऽप्ययं स्नाग्घि कारागृहान्निर्गतः सुव्रती ।
राज्यतन्त्रे स्वतन्त्रेऽपि संदृश्यते भीतिमुत्पादयन्तः परां सर्वतः ॥५०॥

राष्ट्र-नैजाधिपत्यस्य संरक्षणं गुप्तरक्षाधिऽऽपायत्तमेव ध्रुवम् ।
नीतिमन्तस्त्वतो जागरासंयुता गुप्ततन्त्रावने शङ्किताः सुस्थिताः ॥५१॥

वेश्मयुद्धं विना शान्तिसम्भावना भूतले नास्ति नासीद्धि निश्चप्रचम् ।
**ज्यूरिचे** संजगर्जाथ वै **लेनिनो**, वर्तमानो भविष्यस्य संसूचकः ॥५२॥

गुप्तरीत्या स्वकेन्द्रस्थितिं वर्धयन् भूमिगर्तेषु सँल्**लेनिनः** प्रोक्तवान् ।
अस्त्रघातेन ते नाशनीया द्रुतं प्रोच्चपीठस्थिता ये धनस्वामिनः ॥५३॥

विश्वरास्वामिनां दुष्टनीतिः सदा दीनवर्गस्य संशोषणायोद्यता ।
काल एवागतः साम्प्रतं स्वामिनां कर्तनं लुण्ठनं श्रेयसे साम्प्रतम् ॥५४॥

**लेनिन**स्यात्र विज्ञाय संघोषणां **प्लीखनावो** भृशं दुःखितः प्रोक्तवान् ।
**रूस**राष्ट्रक्षतिर्भाविनीह ध्रुवं **जर्मनो**राष्ट्रसत्काज्जयान्निश्चितम् ॥५५॥

इत्थमस्मिन् करारोपणाद् दुःखिता युद्धभारेण राष्ट्रस्य ते निर्धनाः ।
अर्थकष्टात् पुनः सर्वकारो ध्रुवं पीडितश्चात्र हा हा ध्वनिः श्रूयते ॥५६॥

एक कोटिस्तथाशीतिलक्षा जनाः कार्यलग्नाश्च संप्रेषिताः सीम्नि वै ।
तेन राष्ट्रस्य कार्याणि रुद्धानि च श्रेष्ठिवर्या भृशं व्याकुलाः सर्वतः ॥५७॥

वस्तुनिर्मायिकाणामभावस्तथा यन्त्रहीना नु संस्थानसंरक्षकाः ।
राष्ट्रियं तत्समुत्पादनं साम्प्रतं कर्तुमीशाः कथङ्कारमत्र ध्रुवम् ॥५८॥

युद्धसीमाजयं सैनिका नाप्नुवन् प्राणहानिर्भृशं विप्लवेऽभूत्तथा ।
युद्धसञ्चालनं दोषपूर्णं महज् **जार**भूभृत्स्वयं योजनां निर्ममे ॥५९॥

एष युद्धोऽभवत् भौममान्दोलनं क्षेत्रपालैः कृतन्नात्र रोद्धुं क्षमः ।
भूमिपालास्तु भूमेः स्वयं स्वामिताम् इच्छवः सन्ति **रूसे** हि निश्चप्रचम् ॥६०॥

किञ्च **कैडेट्स**-नामा तदा चोक्तवान् **रूस**राष्ट्रे वयं चैक्यभावान्विता ।
शत्रुसङ्घर्षहेतौ वयं सुस्थिताः शक्तिमन्तो भविष्याम उत्थायिनः ॥६१॥

भेदनीतिर्हि नास्मद्विकासाय वै शत्रवस्तेन तुष्टा भविष्यन्ति नः ।
मुख्यकार्यं विनाशोन्मुखस्याग्रतः साम्प्रतं **रूस**राष्ट्रस्य संरक्षणम् ॥६२॥

किन्तु **जारो** द्वितीयो हि दुष्टाशयः क्रोधयुग् दृप्तचेताः सदाऽऽस्ते शठः ।
पूर्णविश्रम्भयुक्तः स्वपत्न्यां वृथा बन्धुवर्गाय सन्तापदः सर्वदा ॥६३॥

तत्र **गैलीशिया**सीम्नि **जार**स्य वै सैनिकाः शत्रुसैन्यैर्भृशं निर्जिताः ।
तेन **डूमां** सभां वै समाकारयद् राष्ट्रतन्त्रे सुधाराय **जार**स्तदा ॥६४॥

या हि **डूमा**सदस्यैश्च सम्पादिता प्रस्तुतिः कार्यतां प्राप सा नाधुना ।
निर्णयस्य प्रदाता तु **जारः** स्वयं डूमया तेन लोका भ्रमे स्थापिताः ॥६५॥

अग्निना लोहचूर्णेन लोकेऽधुना दग्धुमेवात्र योग्यं हि सिंहासनम् ।
दुष्टसाम्राज्यवादस्य वै निर्धनैर् **लेनिनः** संजगर्जाथ रक्ताननः ॥६६॥

शोणितां क्रांतिमुत्सृज्य संभावना नास्ति शान्तेः कुराज्ये यतः साम्प्रतम् ।
तूर्णमेवात उत्तिष्ठताव्याकुलं निर्धना दुष्टराज्यव्यवस्थाच्छिदे ॥६७॥

कार्यमेतद्धि लोके महद्दुष्करं किन्तु नित्यं प्रयत्नेन नासम्भवम् ।
प्रज्ञया हस्तपादादिभिः संयुतः किन्न कर्तुं क्षमो मानवः शक्तिमान् ॥६८॥

नित्यमुद्योगयोगेन चाभ्यस्यता मानवेनेह सर्वं तु सम्पाद्यते ।
कर्महीना मुधा दैव दैवेति हा निर्धनान् रक्ष भो ! प्रार्थना कुर्वते ॥६९॥

मानवो भाग्यनिर्मायिकोऽस्ति स्वयम् उच्चनीचाश्च तेनैव वै निर्मिताः।
श्रेष्ठिनो निर्धनाः सन्ति ये भूतले नूनमेतेऽपि तेनैव सम्पादिताः ॥७०॥

भिन्नसंघर्षभेदा इमे राष्ट्रियाश् चानिवार्या विकासाय नः साम्प्रतम्।
आगतश्चात्र संक्रान्तिकालो महान् अग्नितापेन वै काञ्चनं दीप्यते ॥७१॥

विश्वबोल्शेविका वेश्मयुद्धेच्छुका रौद्रिकां प्रस्तुतिं चक्रुरुद्दुःखिताः।
राजनीतिस्थितिं वीक्ष्य चानिश्चितां क्रान्तिसम्भावनामध्रुवां मेनिरे ॥७२॥

लक्ष्यलाभं विना वै श्रमेणान्विताः किन्तु विश्रामभाजो व्यलक्ष्यन्त न।
स्वप्रचारं विभिन्नेषु वर्गेषु ते वर्धयन्तश्चिरं बभ्रमुः साम्प्रतम् ॥७३॥

वर्गसंघर्ष एवं भृशं वर्धितो लेनिनश्चार्थभावादृते पीडितः।
आह्निकस्यापि कृत्यस्य हेतोर्व्रती नाप रायं ततोऽभूद् भृशं व्याकुलः ॥७४॥

स्वतन्त्रसूर्ये ह्युदिते हि राष्ट्रे
विकासमेष्यन्ति च कुड्मलानि।
परागवाही खलु गन्धवाहः
प्रसारयिष्यत्यमलं सुगन्धिम् ॥७५॥

इति पद्म-शास्त्रिविरचिते श्रीलेलिनामृतमहाकाव्ये "लेनिनस्यान्त-
र्दलीयसंघर्षो" नाम नवमः सर्गः॥

# दशमः सर्गः

## [ जारतन्त्रपतनम् ]

लोकेऽस्मिन् जीवनाकाङ्क्षा प्रेष्ठा प्राणवतां सदा।
प्राणवन्तः प्रकुर्वन्ति सृष्टिसञ्चालनक्रमम् ॥१॥

श्वसिमीति विधास्यामि, प्राणसंरक्षणोत्सुकः।
जीवः प्रवर्तते कार्ये, जीवितेहा निसर्गजा ॥२॥

चिरं शान्तिः क्व सम्पत्तिर् व्यामोहः क्व च निर्वृतिः।
आक्रान्ते रिपुभी राष्ट्रे क्व सुखं राष्ट्रवासिनाम् ॥३॥

युद्धलिप्साभिभूतानां तुष्टानां दुष्टचेतसाम्।
क्व सुखं शाश्वतं लोके नरलोहितपायिनाम् ॥४॥

युद्धच्छाया कराला तु रूसेऽप्यापतिता यदा।
जारतन्त्रस्थितिः काऽऽसीत् तदा, किञ्चिद्विचार्यते ॥५॥

जठराग्निर् विनान्नेन शममेति क्व जन्मिनाम्।
"अयमन्नमयः कोशश् चान्ने प्राणाः प्रतिष्ठिताः ॥६॥

शतशः खाद्यहट्टेषु पङ्क्तिबद्धा बुभुक्षिताः।
जारतन्त्रस्थिते क्रुद्धा दृश्यन्ते लोहितेक्षणाः ॥७॥

चरा राष्ट्रस्थितिं वीक्ष्य जारं सद्यो व्यजिज्ञपन्।
भस्मावृताग्निवल्लोकः क्रान्तिर्नेदीयसी ध्रुवम् ॥८॥

षड्गुणा मूल्यवृद्धिर् हि जवात्सैन्यप्रशिक्षणम्।
सामग्रीणामभावश्च क्रान्तिबीजं निरूपिरे ॥९॥

सैनिकाः प्रेषयामासुः सीमातः प्रतिवेदनम् ।
वयं योद्धुं कथं शक्ता भोजनेन विना चिरम् ॥१०॥

सेनेशाः सर्वकारं तु वारं वारं न्यवेदयन् ।
सेनास्वपि द्रुतं क्रान्तिर् भवित्री नात्र संशयः ॥११॥

भ्रष्टाश्च मन्त्रिणः सर्वे त्यक्त्वा वै गृहमन्त्रिणम् ।
नूनं क्रीडनकं जाता सम्राज्ञी भ्रष्टमन्त्रिणाम् ॥१२॥

भ्रातृजो **ग्रान्डड्यूकश्च** **जार**मद्य न्यवेदयत् ।
भवत्सिंहासनं शीघ्रं भूमिसात्सम्भविष्यति ॥१३॥

जनविश्वासमाप्ता ये सदस्या राष्ट्रपोषकाः ।
त एव राज्यतन्त्रं हि चालयेयुर्न **जार**जाः ॥१४॥

सम्राज्ञी हृदयेनेयं **जर्मन**स्य समर्थनम् ।
प्रकरोति ह्यतो **डूमा** कान्दिशीकी विरोधिका ॥१५॥

सेनाध्यक्षः **करीमोवः** सङ्कटे घोषणां व्यधात् ।
सेना राजगृहक्रान्तौ जनतायाः समर्थकः ॥१६॥

असामाजिकतत्त्वानां वृद्धिर्जाता समन्ततः ।
युवानश्चोद्यता मत्ता बभ्रमुर्वीथिषु क्षणात् ॥१७॥

आदिदेशाथ सम्राज्ञी स्मयगर्वोन्नतानना ।
बलाद्धि निग्रहः कार्यो द्रुतं राजविरोधिनाम् ॥१८॥

शान्तिमेष्यति विद्रोहो निर्हेतुः शरदभ्रवत् ।
इति मेने नृपद्वारस्थिता राज्ञी मदोद्धता ॥१९॥

**डूमा** भग्नाभवच्छीघ्रं रूसे **जार**निदेशनात् ।
राज्ञस्तुष्टं मनस्तेन, क्षुद्रः स्वल्पेन तुष्यति ॥२०॥

**लेनिनः** **स्विट्जरक्षेत्रे** प्राणदण्डभयाद् ध्रुवम् ।
सुगुप्तश्चालयामास दलकार्यविधिं तदा ॥२१॥

दुर्दिनैरावृतश्चाऽऽसीत् तेषु घस्रेषु **लेनिनः** ।
धनाभावेन कार्याणि न चलन्ति महीतले ॥२२॥

धनिनस्तु चिकीर्षन्ति विश्वव्यापारवर्धनम् ।
युद्धं विना प्रतिस्पर्धा व्यापारेषु कथं भवेत् ॥२३॥

लोके चार्थव्यवस्था वै सर्वथा नूतना भवेत् ।
समानार्थविभागेन सुखिनः स्युः प्रजा इह ॥२४॥

समाजवादतत्त्वस्य प्राप्तिः क्रान्तिबलेन वै ।
निश्शस्त्रैर्दुश्शका क्रान्तिर् **लेनिनः** प्रजुघोष ह ॥२५॥

मातृमृत्युसमाचारात् सन्तापं स भृशं गतः ।
पुरुषं हि परीक्षन्ते बाधमाना विपत्तयः ॥२६॥

मृत्योः षड्वर्षपूर्वं या शुश्राव सुतभाषणम् ।
प्रथमं **स्काटलैण्डे** वै मृता हा ! साद्य **मारिया** ॥२७॥

वीरप्रसविनी गर्भे यं पुपोष प्रयत्नतः ।
नेहाऽऽयाता निजं पुत्रम् अदृष्ट्वैव क्व हा ! गता ॥२८॥

बलिदानशतं कृत्वा सुतसंरक्षणोत्सुका ।
जीवनं यापयामास **मारिया** हा ! भुवस्तले ॥२९॥

सर्वंसहा धरित्रीवत् सिंहीवत् सुतवत्सलाम् ।
शारदेन्दुनिभां सौम्यां नृसिंहजननीं नुमः ॥३०॥

असवो वसवश्चैव यासां सन्तानहेतवे ।
कामधेनुसमाः पुण्या धन्यास्ता विश्वमातरः ॥३१॥

मग्नो गाढान्धकारेषु दुर्योगाल्लेनिनोऽधुना ।
मातृमृत्योर्दलद्वेषाद् दुःखितोऽभूदनर्गलम् ॥३२॥

भिन्नो दलानुयायिभ्य एकाकी खिन्नमानसः ।
**फिलिप्पानामकं** शिष्यं प्रोवाच नयकोविदः ॥३३॥

चत्वारः पञ्च वा शक्ता मद्दलस्यानुयायिनः ।
यदि स्युर्घोषणां कुर्यू रूसे युद्धविरोधिनीम् ॥३४॥

तेन तुष्टा भविष्यन्ति श्रमिकाश्च परश्शताः ।
क्रान्तिमिच्छन्ति ये रूसे क्रान्तेरान्दोलनेन वै ॥३५॥

दलानुयायिनं चैकं तस्मिन्नालभत ध्रुवम् ।
दलभक्तं दृढं क्रान्तं सदस्यं निखिलेष्वपि ॥३६॥

लेनिनं संकटे वीक्ष्य तस्य मित्रं धनान्वितम् ।
क्रासिनं कथयामास साहाय्यार्थं सुलोमनः ॥३७॥

उपहासपरो भूत्वा ददौ स दश रूबलान् ।
अलं भो ! कथयामास शान्त्या तं हि सुलोमनः ॥३८॥

लेनिनो नाधिकार्येष बर्बरोऽस्ति भयानकः ।
कदा का योजना तस्य मस्तिष्काद्बहिरेष्यति ॥३९॥

लेनिनस्यैव सम्बन्धे पेरिसाद्धि प्रकाशिते ।
पत्रे प्रकाशयामास मेनजिन्स्की स्वसम्मतिम् ॥४०॥

छद्मवेषधरश्चायं राजनैतिकनायकः ।
स्वोद्देश्यान्मार्क्सवादं यो विभनक्ति सहस्रधा ॥४१॥

स्वयं विभ्रमितास्तेन तद्दलस्यानुयायिनः ।
प्रजा यथा प्रमत्तेन निरङ्कुशनृपेण वै ॥४२॥

एकमात्रमयं मूढश् चाऽऽत्मानं दलनायकम् ।
विश्वश्रमिकसङ्घस्य मन्वानः प्रविलक्ष्यते ॥४३॥

कदाचिच्छासनारूढो यदि स्यादेष दुर्मतिः ।
मन्ये विपत्तये तु स्यात् पालवन्नात्र संशयः ॥४४॥

चालयन्तः कशाघातात् सर्वहारादलं समे ।
कोलाहलं प्रकुर्वन्ति वृथा शासनलोलुपाः ॥४५॥

रूसाद् बहिःस्थिताश्चैते मिथ्यागर्वोन्नताः क्रुधः ।
मिथ्याप्रभाषणोद्युक्ताः किं नो लेनिनवादिनः ॥४६॥

एकदा **ज्यूरिचे** नाम्नि नगरे सुमनोरमे ।
यूनः संबोधयामास श्रमिसङ्घस्थितान् सुधीः ॥४७॥

**योरोपे** साम्प्रतं शान्तिश् श्मशान इव लक्ष्यते ।
तया भ्रान्तिमितैर्भाव्यं नास्माभिरवधार्यताम् ॥४८॥

साम्राज्यवादयुद्धस्य भविता नु पराजयः ।
साम्राज्यं वलतो यस्माच् चालयन्ति निरङ्कुशाः ॥४९॥

जनवित्तसमुद्भूता क्रान्तेर्ज्वाला समन्ततः ।
**पूंजीवादभवं** दर्पं दाहयिष्यत्यसंशयम् ॥५०॥

तदैव नूतनां **रूसे** स्थितिं विस्फोटकारिणीम् ।
**रूसस्थजनता** ज्ञात्वा जवेन स्वयमुत्थिताः ॥५१॥

श्रमि-स्त्री-सैनिकच्छात्रास् त्रिसहस्रमितास्तदा ।
**तोरिडे** भवने राज्ञः सैन्यरूपेण सङ्गताः ॥५२॥

तद्राजभवने क्रुद्धाः स्वाधिकारं व्यधुर्जनाः ।
**डूमया** मिलिता क्रान्तिर् धन्योऽयमरुणोदयः ॥५३॥

श्रमिकाः श्रमसंस्थाने कृतभूरिपरिश्रमाः ।
स्वप्रातिनिध्यमिच्छन्तः सर्वकारे विशेषतः ॥५४॥

सैनिका द्रोहसंयुक्ताः श्रमिकाये विरोधिनः ।
जवादुन्मोचयामासुः काराभ्यस्ते तु वन्दिनः ॥५५॥

राज्यसञ्चालनार्थं ते स्वतन्त्रां समितिं तदा ।
स्वयं निर्वाचयाञ्चक्रुः समेत्य जनतान्त्रिकाः ॥५६॥

तत्कालमेव ते कार्यं सभायां कर्तुमुद्यताः ।
**सर्वहारा** क्रान्तिकारी परिषच्चापि निर्मिता ॥५७॥

खाद्यान्नस्य समाधाने क्रान्तियुद्धप्रसारणे ।
तथाराजकतानाशे चक्रुरेते तु निर्णयम् ॥५८॥

परिषत् सर्वहारा तु सैनिकैः सह सङ्गता ।
स्वनीतिं घोषयामास राष्ट्रोत्थानाय सम्प्रति ॥५९॥

श्रमिकाणाञ्च मित्राणि वयं नो जारसेवकाः ।
सेनास्थाः सैनिकाः प्रोचुः क्रान्त्या सह वयं सदा ॥६०॥

भटः सुसज्जितश्चैकः सैमिनोव्स्की दलस्थितः ।
आगत्य घोषयाञ्चक्रे सेनायाः शुभकामनाम् ॥६१॥

मास्कोद्रोहमपाकर्तुं मम सेना न सम्मता ।
विज्ञाय विव्यथेऽत्यन्तं हृदि जारनिकोलसः ॥६२॥

राज्यसूत्रं करे कर्तुं चिखेड्जे च किरेन्सकी ।
विभ्रम्य सर्वसैन्येषु क्रान्त्याह्वानं हि चक्रतुः ॥६३॥

राज्यसिंहासनत्यागसम्बन्धि, प्रेषितं जनैः ।
अनुवन्धयितुं जारं रुज्स्की पत्रं पपाठ वै ॥६४॥

राज्यसिंहासनं त्यक्तुं सज्जो राष्ट्रहिताय वै ।
दुर्दैवाद् राष्ट्रनाशाय मम जन्माभवद् ध्रुवम् ॥६५॥

कज्जाकाः कान्दिशीकं मां युद्धसीमापलायितम् ।
सिंहाच्छृगालवद्भीतं कथयिष्यन्ति भूतले ॥६६॥

पुराणपन्थिनश्चान्ये क्षमिष्यन्ते न मत्कृतम् ।
अहमस्मि कुलाङ्गारो यतः शपथभेदकः ॥६७॥

अस्थायिसर्वकारस्य नियुक्तिर्विहिता ध्रुवम् ।
यस्मिन् प्रतिनिधी जातौ सैनिकश्रमिकौ तदा ॥६८॥

तेन चाष्टावभिस्तावाः पारिता निजसंसदि ।
स्वातन्त्र्यं भाषणेष्वस्तु मुक्ताः स्युर्वन्दिनो द्रुतम् ॥६९॥

संविधानस्य निर्माणं गुप्तनिर्वाचनं तथा ।
मुख्यतस्तु प्रजातन्त्रे निकायानां स्वतन्त्रता ॥७०॥

न्यायवादी तदा ख्यातो किरेन्स्की नायकः खलु ।
वाक्पटुः श्रमिकाणां यो नेताऽऽसीद्धि जनप्रियः ॥७१॥

स सर्वत्राश्रमद्धीमान् जनतासु न्यवेदयत् ।
नवतन्त्रस्य साहाय्यं कुर्युः सम्प्रति नागराः ॥७२॥

बलिदानशतं कृत्वा मिलिता या स्वतन्त्रता ।
तस्याः संरक्षणार्थाय कटिबद्धा वयं भुवि ॥७३॥

धन्यवादशतं तेभ्यश् चार्पयामि मुहुर्मुहुः ।
ये पतङ्गायिताः क्रान्तौ राष्ट्रभक्तिपरायणाः ॥७४॥

तथा येषां प्रयत्नैर्नु क्रान्तिः सफलतां गता ।
श्रमिकाश्चाभिजातास्ते प्रणम्यन्ते सहस्रधा ॥७५॥

स्वराष्ट्रभक्तिव्रततत्पराणां
कथा सदैवाऽऽद्रियते सुधेव ।
ये लोकसेवाव्रतमाचरन्ति,
गायन्ति लोकाश्चरितानि तेषाम् ॥७६॥

इति पद्म-शास्त्रिविरचिते श्रीलेनिनामृतमहाकाव्ये "जारतन्त्रपतनम्" नाम दशमः सर्गः ॥

# एकादशः सर्गः

## [ लेनिनस्य पैत्रोगादपुर्यामागमनम् ]

गाढान्धकारे भुवि संप्रवृत्ते रुषातिरक्तानन एष सूर्यः ।
उदेति प्रातर्निशितैर्मयूखैः संहर्तुकामस्तमसः प्रवृत्तिम् ॥ १ ॥

कूले खगानां कलकूजितैश्च प्लुतैर्नु प्रातर्मृगशावकानाम् ।
तोष्टूय्यते यस्तिमिरान्तकः स विश्वास एवोन्नतिसाधकानाम् ॥ २ ॥

कूलंकषाणां नदनिर्झराणां जले सुपेये सति निर्मलेऽपि ।
उद्योग एवास्ति सदोपदिष्टो लोकस्य कूपोत्खनने प्रवृत्तिः ॥ ३ ॥

लक्ष्यार्थसम्प्राप्तिकृते हि भाव्यं जिगीषुणा नित्यमतन्द्रितेन ।
धनुर्भृता दत्तदृशा यथात्र स्वविग्रहेणावनतेन किञ्चित् ॥ ४ ॥

रूसेऽपि पूर्वं नृपशासनस्य प्रजाहितार्थं पतनं बभूव ।
उत्थाय तूर्णं श्रमिका अहृष्यन्नाच्छिद्य जारस्य करात्कुराज्यम् ॥ ५ ॥

बोल्शेविका बन्धगतास्तदानीं कारागृहे ये समयं व्यतीयुः ।
ते साम्प्रतं बन्धनतो विमुक्ता बभूव रूसे नवसुप्रभातम् ॥ ६ ॥

वासन्तिके मङ्गलसुप्रभाते जाते विरेजुस्तमसावृतानाम् ।
तुषारपाताहतपल्लवानां विपल्लवानां मुखपङ्कजानि ॥ ७ ॥

श्रीलेनिनः शासनपातजातं श्रुत्वा समाचारमयं नृसिंहः ।
स्तब्धोऽभवत्क्रान्तिभृतां सुकृत्या तथा तदा जारनिपातनेन ॥ ८ ॥

वृद्धः करोन्स्की त्वरया प्रधावन् श्रीलेनिनावासमुपेत्य वार्ताम् ।
संश्रावयामास प्रहर्षितः सन् कक्षस्थितं लेनिनमात्मनिष्ठः ॥ ९ ॥

वर्षीयसस्तस्य मुखारविन्दाच् छ्रुत्वापि विश्वासमुपेयिवान्न ।
यावन्न शङ्काकुलितेन तेन तज्ज्यूरिचे वृत्तमपाठि नूत्नम् ॥१०॥

प्रवासवासव्रतिनोऽस्य चित्ते कष्टान्यसंख्यानि ममुः सुखेन ।
तस्मिन्नवक्रान्तिसुवृद्धिजन्यो हर्षो ममौ चेतसि नास्य सद्यः ॥११॥

प्रवासिनां वाथ विहंगमानां दूरंगतानां स्वनिवासभूमौ ।
प्रयाणमेवाऽऽतनुते सुखं वै स्वतन्त्रता कस्य न हर्षदाभूत् ॥१२॥

मत्वा क्षणं युक्तमिमं स पैत्रोग्रादं प्रयातुं मतिमाबबन्ध ।
विलक्ष्यते कार्यभृतां नृलोके सतां सदोद्देश्यमयी प्रवृत्तिः ॥१३॥

स मानचित्रं त्वथ निर्मिमाणो देशस्य सम्भावि सदाऽऽत्मतृप्तः ।
स्वतन्त्रतन्त्रस्य विकासकारि व्यूहं नु चित्ते रचयाम्बभूव ॥१४॥

श्रीलेनिनस्तन्त्रपरायणानां स्ववर्गसंघर्षविवर्धकानाम् ।
बोल्शेविकानामपि सैनिकानां विश्वासभूमिं न गतस्तदानीम् ॥१५॥

मधौ स्वतन्त्रत्वपरागवाही मरुत्प्रमत्तः प्रसृतो हरित्सु ।
आमन्त्रणं चाथ ददौ स्वराष्ट्रसेवासमाराधनतत्परेभ्यः ॥१६॥

नृत्यत्कराग्रैर्नवपल्लवैश्च सुस्वागतञ्चात्र समागतानाम् ।
महाशयानां च महीरुहाणां व्यधुर्विवस्त्राः श्रमिका लताश्च ॥१७॥

दीप्यन्त एवात्र ज्वलच्छिखाभिः स्नेहप्रपूर्णाः परितः प्रदीपाः ।
सर्वत्र राज्ये गृहदेहलीषु परं तमो जारनिवासमध्ये ॥१८॥

गम्या वसन्ते तु भवन्ति पैत्रोग्रादस्थ मार्गा विगलत्तुषाराः ।
कालान्तरे नैव भवन्ति गम्यास् तुषारपाताहितभीषणत्वात् ॥१९॥

स्वतन्त्रतार्थं य इमे सहर्षं कारागृहेषु श्रमदण्डमाभजन् ।
ते जारराज्यक्षयणादिदानीं स्वं स्वं प्रदेशं प्रति चेलुरुत्काः ॥२०॥

ये कर्षकाश्छात्रगणाः सुबुद्धा आसन् समन्तान्नृपपाशबद्धाः ।
विमुक्तपाशा व्रतिनश्चरन्ति प्रसूनमालाभिरलङ्कृतास्ते ॥२१॥

रम्यं प्रसूनैः परितश्च पैत्रोग्रादस्थलं सम्प्रति तीर्थधाम।
बभूव यस्मिन् हिमपर्पटीनाम् अधो निपातः समयानुकूलः ॥२२॥

राष्ट्रस्य भक्ताश्च भटा अनेके तथा युवानो युवतीजनाश्च।
अद्य स्वतन्त्रं निजदेशमायन् महोत्सवश्चाजनि रूसराष्ट्रे ॥२३॥

निजप्रजापीडनजातपापभारेण जारेण विमर्दिता ये।
त एव सद्यो हि विमुक्तबन्धा जारस्य कार्याणि कदर्थयन्ति ॥२४॥

श्रीस्टालिनः स्वेर्डलवस्तदानीं मुरानवः कामनवाभिधश्च।
निर्वासिता ये खलु **मार्चमासे** समाययुस्ते प्रथमं स्वदेशम् ॥२५॥

यत्प्रावदापत्रमिदं प्रकाशम् आयातमत्र श्रमसाधकानाम्।
निर्भर्त्सना तेन वृथैव चक्रे तदा नवस्यास्य तु शासनस्य ॥२६॥

श्रीस्टालिनः कामनवो मुरानो द्रुतं हि सम्पादकमण्डलस्य।
सुस्वामिनः स्वागभवंस्तदानीं दलस्य सङ्घर्षनिवारणाय ॥२७॥

श्रीलेनिनोऽब्रूत हि सर्वहारा प्रच्यावयेन्नूतनसर्वकारम्।
युद्धावरोधो भवतु त्वरात एतद्द्वयं प्राथमिकं तु मन्ये ॥२८॥

व्याख्यां तु युद्धस्य तदाकरोत् स श्रीलेनिनस्तां नितरामपूर्वाम्।
संजातरोषभ्रमकौतुकोऽयं श्रुत्वा स्वयं स्टालिन इत्थमाह ॥२९॥

शर्मण्यसाम्राज्यपराजयात्मन्याधारभूमौ जनतन्त्रमेतत्।
कल्याणकृत्स्याज्जगति प्रकामं श्रीस्टालिनो घोषितवांस्तदानीम् ॥३०॥

शर्मण्यसेनाक्रमणं हि यावद् रूसे प्रवृत्तं परितोऽस्ति तावत्।
भुशुण्डिकाभीषणगर्जनाभिर् युक्तैः सदास्माभिरपीह भाव्यम् ॥३१॥

यावन्न शान्तिर्जनविप्लवेऽस्मिन् राष्ट्रेषु सङ्घर्षरतेषु शश्वत्।
स्वराष्ट्रसेवाव्रतिनोऽपि तावत् प्रचण्डशक्त्या प्रधनं नु कुर्युः ॥३२॥

क्व शक्तिहीनेन जनेन शुभ्रं यशो नृलोके समवाप्यते वै।
शक्त्या विना शान्तिप्रकल्पनापि सत्यं हि मिथ्या कथिता नृलोके ॥३३॥

शनैः शनैः सङ्घटिताश्च भूत्वा स्ववर्गनीतिञ्च प्रसारयन्तः ।
विश्रम्य सर्वान् धनिकानिहस्थान् प्रचाल्यते नूतनराज्यतन्त्रम् ॥३४॥

विभिन्नबोल्शेविकवादिनश्च समेत्य तूर्णं श्रमिकाः सहस्रम् ।
निनिन्दुरेते दलनीतिमित्थं "दलप्रधानाः स्वपदं त्यजन्तु" ॥३५॥

तां स्टालिनस्येह विचारधारां पत्रे पठित्वा बहवः सदस्याः ।
श्रीलेनिनश्चापि दृढं विरोधं प्रादर्शयञ्ज्यूरिचमण्डलस्थाः ॥३६॥

'दूरस्थितं' पत्रमिदं जुघोष यत्प्रावदायां पठितं जनैश्च ।
श्रीस्टालिनः कामनवश्च तूर्णं सम्बन्धभेदं दलतो विधत्ताम् ॥३७॥

श्रीलेनिनो राजपराजयं तं मेने हि षड्यन्त्रकृतं हि पाशम् ।
मृगाः पुनः स्वादपरा हि यस्मिन् प्रसारिताक्षा अपि संपतन्ति ॥३८॥

साम्राज्यवादव्रततत्पराणां विश्रम्भभाजः प्रतियान्ति दुःखम् ।
तिष्ठन्ति मर्त्याः सततं च नद्यास् तीरस्थवृक्षा इव कम्पमानाः ॥३९॥

शक्तिप्रकर्षेण यथा हि विद्युद् विद्योतते लोचनमोददात्री ।
धनी यथा वाऽऽश्रितरक्तपायी साम्राज्यवादोऽपि तथैव लोके ॥४०॥

पाश्चात्यराष्ट्राणि तु यानि तानि साम्राज्ययुद्धस्य विवर्धकानि ।
उत्प्रेरयँस्तानि हि लेनिनस्य समर्थकान् शक्तिसमर्जनाय ॥४१॥

उद्देश्यमेषां श्रमिकाः सहस्रं नश्येयुरेते कृषकाश्च दीनाः ।
भवेच्च सम्पत्तिमतां हि येन साम्राज्यवादस्य जयः पृथिव्याम् ॥४२॥

पुनः सुधीर्लेनिन इत्थमाह सेना नवा स्याद् घटिता स्वदेशे ।
यस्यां युवानः खलु सार्धसप्तलक्षात्मकाः स्युर्बलिनः सुनम्राः ॥४३॥

रम्या चमूः सा धनलोलुपानां साम्राज्यविस्तारकृतां चमूभिः ।
घोरातिघोरं प्रधनञ्च कुर्यात् तथा स्वमित्रैरपि सन्धिभङ्गम् ॥४४॥

दुर्नीतिपङ्के पतिता जयश्रीर् जहाति नूनं नरलोकसङ्घम् ।
कवोष्णरक्तप्रकरप्रदानैः संरक्षणीया सततं जयश्रीः ॥४५॥

प्रवासिनस्ते दशसंख्यकाश्च **रूसं** प्रयातुं मतिमाबबन्धुः।
उत्पादयामासतुरद्य बाधां **ब्रिटेनफ्रांसौ** गमने स्वराष्ट्रे ॥४६॥

**शर्मण्यमार्गेण** निजप्रदेशे भवेदमीषां गमनं तदास्य।
निर्वर्तिताः स्युः खलु युद्धबद्धाः प्रास्तौन्मतं स्वं किल **मारतोवः** ॥४७॥

पुनर्यदा **पारवस**प्रयत्नैर् मार्गे प्रशस्ते सति **ज्यूरिचे**ऽस्मिन्।
हर्षान्वितास्तद्दलपोषकाश्च रुष्टाः परं केचिदथ प्रकामम् ॥४८॥

**रूसे**ऽपि तस्यागमनेन रोषो विरोधिषु प्रादुरभूत्तदानीम्।
**फ्रान्से** तथा **स्विट्जरलैण्डसंज्ञे** व्यधुर्विरोधं भृशमत्र सर्वे ॥४९॥

समर्थकैरावृत एष नेता **श्रीलेनिनो** वाहनमारुरोह।
व्यधुर्विरोधं वचनैश्च तीव्रैः केचिज्जनास्तद्गमनस्य तीव्रम् ॥५०॥

स्वकक्षवातायनसम्मुखे स विचारमग्नो ह्युपविष्ट आसीत्।
**श्रीलेनिनः** सम्प्रति जातहर्षः शिरःप्रकम्पेन तदा रराज ॥५१॥

**ग्रेन्टे** कृपस्का खलु **जीनवेफः** सर्वेऽपि सार्धं चलिता हि तेन।
**रूसे** हि किं स्यादिति सर्व एते वार्तां नु चक्रुर्निखिलां त्रियामाम् ॥५२॥

प्रदोषकालेऽभिगते हि **पैत्रोग्रादस्य** रम्येऽतितरे विशाले।
**फिन्लैण्ड**गन्त्रीस्थलचत्वरेऽस्य जनाः समाजग्मुरवेक्षणाय ॥५३॥

सम्मर्दमध्ये कृषका भटाश्च छात्राः सदास्थाः श्रमजीविनश्च।
विभिन्नसंस्थागतमुख्यलोका आजग्मुरेते खलु दर्शनार्थम् ॥५४॥

करेषु तेषां ननु रक्तवर्णा रेजुः पताकाः पवनाच्चलन्त्यः।
आरक्तवर्णा इह रक्तजातक्रान्तिस्वरूपा गगनोच्छ्रिताश्च ॥५५॥

समुत्सुकाः स्वागततत्परा ये त्वरान्विता हर्षभरेण नूनम्।
ध्यानैकमग्नाः श्रमसाधकास्ते ध्वनीनशृण्वन्निह रेलगन्त्र्याः ॥५६॥

क्षणान्तरं ते ददृशुः प्रकोष्ठान् प्रकाशमानांश्च सुशोभमानान्।
इमे स्वकक्षास्थितिमागताः किं दधावुरित्थं विचिकित्समानाः ॥५७॥

अवातरत्पूर्वमसौ नृनेता संक्रान्तकालक्रमरोधकश्च ।
स्कन्धे समारोप्य जनास्ततस्तं जारस्य कक्षामनयंस्त्वरातः ॥५८॥

सम्मर्द आसीद् विपुलस्तदानीम् आपूरिता भूर्जयपूर्णघोषैः ।
तारागणेनेव विहायसीन्दुः समन्ततः संवृत एष आसीत् ॥५९॥

स्वराष्ट्रसेवाव्रततत्पराणां समादरो वै क्रियते न कुत्र ।
मेलापकास्तत्र चितासु तेषां सदा लगिष्यन्ति महीतलेऽस्मिन् ॥६०॥

श्रीलेनिनश्चात्र जवेन गच्छन्नुपाययौ सम्प्रति कक्षमध्यम् ।
अध्यक्षचैखेड्जवरेण सार्धं रक्ताननः संलपितुं प्रचक्रे ॥६१॥

अध्यक्षवर्यः प्रजगाद हृष्टा भृशं वयं वो ह्यभिनन्दनेन ।
क्रान्तेस्तु रक्षा क्रियतेऽरितः सदा लक्ष्यार्थिनः किं विरमन्ति कार्यात् ॥६२॥

श्रेयोऽर्थिनः सत्यपथप्रविष्टा भद्राय सन्नीतिविदः क्रमन्ते ।
सन्मार्ग एवास्ति सतोपदिष्टः कुमार्गगाः क्रूरधियो भवन्ति ॥६३॥

आभ्यन्तरे चाक्रमणेऽपि बाह्ये ह्यस्माभिरद्यैकमतेन भाव्यम् ।
स्वोद्देश्यसंप्राप्तिविधौ भवन्तश् चास्माकमस्मिन् सहयोगिनश्च ॥६४॥

श्रीलेनिनश्चान्यमनस्क एव चैखेड्जशब्देषु रुचिन्न लेभे ।
सम्मर्दयुक्तोरकमहासभायां स दत्तदृष्टिः प्रजुघोष सद्यः ॥६५॥

प्रियाणि मित्राणि च भोः ! श्रमान्वितास् तद्रक्तयुक्क्रान्तिकरा भटाश्च ।
सुस्वागतञ्चात्र समागतानां स्वतन्त्ररूसे हि पुनः करोमि ॥६६॥

परासवो ये निजमातृभूमावरातिभिर्युद्धमिता बभूवुः ।
तेभ्यः समेभ्यो विदितेतरेभ्यः श्रद्धायुता मेऽञ्जलयो लसन्तु ॥६७॥

छात्रा युवानो ललना जनन्यः संभर्जिता जारभुशुण्डिकाभिः ।
सम्मर्दिता ये सुकुमारबालाः श्रद्धायुता मेऽञ्जलिरस्तु तेभ्यः ॥६८॥

चिरप्रवासेन प्रवासिता या स्वतन्त्रता चाधिगताधुना सा ।
अस्माभिरस्याः सततं हि कार्यं संरक्षणं रूसनिवासिभिश्च ॥६९॥

अनीयताद्य प्रहरिप्ररक्षितः प्रधानबोल्शेविककार्यगेहे ।
श्रीलेनिनस्तत् फिनलैण्डकक्षात् तत्रापि सोऽभूत् सुचिरं प्रतीक्षितः ॥७०॥

नौचालकान् राष्ट्रभटान्बहिस्थान् प्रतीक्षमाणान् समवाप सद्यः ।
प्रसादकोष्ठापरभागसंस्थः श्रीलेनिनः सिंहनिभो जगर्ज ॥७१॥

क्रान्तिर्हि रूसस्य विभिन्नदेशेष्वन्यत्र च व्याप्तिमती बभूव ।
साम्राज्यदुर्गप्रतिपातनाय भूत्वाग्रदूताः प्रचरन्तु सभ्याः ॥७१॥

अस्त्येकलो जिम्वरवाल्डवर्गः संरक्षकः क्रान्तिविधः स्वराष्ट्रे ।
स निम्नवर्गश्रमिणां हितैषी दलानि नान्यानि तु तद्विधानि ॥७३॥

साहाय्यदानैर्न च पोषितव्यो राष्ट्रेऽधुना नूतनसर्वकारः ।
संगर्जितं तस्य निशम्य सर्वे लोकाः परं विस्मयमापुरत्र ॥७४॥

रुद्ररूपान्वितस्यापि शङ्कारिका
बुद्धिरीशादृते कुत्र सम्प्राप्यते ।
दुष्टसंसेवितां राज्यलक्ष्मीमिमां
बुद्धिवैचित्र्यभाजो भजन्ते भुवि ॥७५॥

इति पद्म-शास्त्रिविरचिते श्रीलेनिनामृतमहाकाव्ये "श्रीलेनिनस्य-पैत्रोगादपुर्यामागमनम्" नाम एकादशः सर्गः ॥

# द्वादशः सर्गः

## [ जौलाई-विद्रोहस्य असफलता ]

लेनिनः स्मारकं प्राप पूर्वं तदा मातुरर्घ्यं न राज्ञः सभाया स्थलम् ।
मातरं को विसस्मार लोके सुतो दुःस्थितः सुस्थितो वा निजे जीवने ॥१॥

लेनिनो ज्यूरिचाद्रूसराष्ट्रं ययौ वर्धिता क्रान्तिसंभावनातः परा ।
कामनोवः सभायां समाघोषयल् लेनिनः श्रेष्ठनेतास्ति राष्ट्रे हि नः ॥२॥

लेनिनश्चात्र कस्मात् कथं वाऽऽगतो जर्मनीनीतिसम्बन्धसम्पोषकः ।
कर्णधाराश्च विद्यार्थिनः सैनिकास् तद्विरुद्धे घृणां चक्रुरुच्चैःस्वराः ॥३॥

रूसराष्ट्रस्थितिश्चास्थिरा लक्ष्यते जारतन्त्रे प्रनष्टेऽपि वै साम्प्रतम् ।
नैजतन्त्रस्य लाभाज्जना उत्थिताः किन्तु जातास्ततोऽमी महोच्छृङ्खलाः ॥४॥

नष्टसंकल्पवन्तो जना राष्ट्रियाः शक्तिरेषां प्रनष्टा विलुप्ताथवा ।
सर्वतो युद्धभीता रुजा वाऽऽवृताः शक्तिसामर्थ्यहीनाश्च दीना इमे ॥५॥

वस्तुनिर्मायिकाः कार्यरोधे रताः सर्वतो वावरुद्धं नवोत्पादनम् ।
सैनिका युद्धसीमां विहाय द्रुतं दीनहीनानलुण्ठँस्तदा ग्रामजान् ॥६॥

शस्त्रहस्ता अपि व्याकुला भीतितः स्वाधिकाराद्विमुक्ता नु निर्देशकाः ।
राज्यतन्त्रेङ्गितेऽपि स्वतन्त्रा इमे मद्यपानेन मत्ता यथा दिग्गजाः ॥७॥

नागरा नीतिविध्वंसिनः साम्प्रतं सेवकाः स्वामिनां प्राणसंहारकाः ।
आपणाश्चोरिता लुण्ठिताः श्रेष्ठिनश् चाग्निकाण्डैश्च राष्ट्रं हि दादह्यते ॥८॥

हिंसया न स्वराज्यस्य संरक्षणं हिंसया कुत्र शान्तिर्नु सम्भाव्यते ।
निष्फला दोषयुक्ताचिरस्थायिनी लोकतन्त्रव्यवस्था त्वहिंसां विना ॥९॥

सर्वनाशाद् विनाशोन्मुखं सर्वतो राष्ट्रमेतत् समुद्धर्तुमीशश्च कः।
क्रान्तिसंक्रान्तिकालाब्धिकल्लोलगां नावमेतां क उद्धर्तुमीशोऽधुना ॥१०॥

लेनिनं नूतने राज्यतन्त्रेऽधुना नेतुकामाः सदस्या न ते प्राभवन्।
तद्विरोधस्थिता ऐकमत्येन तु प्रस्तुतिं चक्रुरुच्चैःस्वराः क्षोभिणः ॥११॥

लेनिनः शक्तिहीनोऽधुना वर्तते राज्यतन्त्रस्य सञ्चालने चाक्षमः।
क्रूरदृष्टिर्वृथाऽऽरोपसंगर्जनैर् निर्धनान् दिग्भ्रमं नेतुमेवोद्यतः ॥१२॥

क्रान्तिसम्भेदकेनापि तेनाधुना राष्ट्रनौः किं कदाचित् सुवोढुं क्षमा।
वावदूको महादुर्मदेनोन्मदः साम्प्रतं योगभ्रष्टोऽभवल्लेनिनः ॥१३॥

दूरदर्शी स्वराष्ट्रस्थितिं वीक्ष्य वै प्रावदायामलेखीद् विचारान्निजान्।
युद्धरोधाय वै वेश्मयुद्धं द्वयो राष्ट्रयोर्भाविकाले तु चावश्यकम् ॥१४॥

स्थायिरूपेण युद्धावरोधाय तु सर्वहाराः सशक्तो भवेत्साम्प्रतम्।
श्रेष्ठिवादप्रणाशाय राष्ट्रेऽधुना शस्त्रहस्ता भवेयुः श्रमेणान्विताः ॥१५॥

साम्यवादाश्रितं नूतनं साम्प्रतं स्थापनीयं दलं नूतनक्रान्तये।
शक्तियुक्तं स्वयं राज्यतन्त्रं ह्यदः चालयेद्येन शान्तिश्चिरस्थायिनी ॥१६॥

प्रत्नबोल्शेविकः प्राह चैकस्तदा लेनिनो दूरदर्शीति निश्चप्रचम्।
तेन दिष्टेन मार्गेण देशो हि नः स्वोन्नतिं कर्तुमीशो भवेन्नान्यथा ॥१७॥

लेनिनः स्वेन मन्तव्यजातेन वै स्वेन चौजस्विसम्भाषणेन ध्रुवम्।
जातरोषानपि प्रागभवान्साम्प्रतं प्राकरोत्कामनिष्ठान्बहून् सम्मतान् ॥१८॥

मालिनोव्स्की-पुरः-पोर्तनोयाभिधो गुप्तचारी य आसीत् सुबोल्शेविकः।
तेन तत्सूचनादायि या संसदि प्रोत्थिता लेनिनस्य प्रभावाद् ध्रुवम् ॥१९॥

लेनिनः प्राह कामं स आस्तां चरः किन्त्वयं नित्यमस्मद्दलोत्पोषकः।
रूसराष्ट्रे हि चास्मद्दलस्योन्नतौ योगदानं ददावेष नूनं कृती ॥२०॥

सर्वहारा-सभा स्पष्टरूपेण वै भर्त्सनां सर्वकारस्य चक्रे तथा।
मेनशेवीदलात्त्यागपत्रं ददुर् वायटिन्स्काभिधाः कामनिष्ठास्तदा ॥२१॥

तत्र बोल्शेविकानां विरोधेऽप्यसौ कामनेवः परं तद्दलं नाजहात् ।
लेनिनो राज्यतन्त्रे स्वसंघस्य वा एकतन्त्रं तु साम्राज्यमैच्छत्तदा ॥२२॥

लेनिनः स्वप्रचारं समावर्धयन् नाविकारक्षियोधादिवर्गे पुनः ।
तेन सम्प्रेरिताश्चाययुस्तद्दलं वायुना प्रेरितः पत्रराशिर्यथा ॥२३॥

मिल्युकेवो विदेशस्य मन्त्री तदा कूटनीतिप्रचारे पटुश्चोक्तवान् ।
मित्रराष्ट्रैः समं रूसजा नागरा युद्धमुच्चैः करिष्यन्ति निश्चप्रचम् ॥२४॥

तद्विरुद्धं जनानां विरोधो भृशं प्रास्फुरत्तत्र संयुक्तरूपेण वै ।
सर्वकारोऽपि संयुक्तरूपादृते स्थायितन्त्रं प्रदातुं न शक्तो ध्रुवम् ॥२५॥

राज्यतन्त्रे तदा गूलकोवाभिधो युद्धमन्त्री पदं स्वं परित्यक्तवान् ।
मुख्यमन्त्री लुव्रोवः समाकारयत् सर्वहारादलस्थान् स्वतन्त्रे तदा ॥२६॥

सर्वकारं लुव्रोवः समस्थापयन् नूतनं भिन्नवर्गान्वितं साम्प्रतम् ।
विक्टरो जेरटेलीः किरेन्स्कीर्नवे सर्वकारे समासँस्तदा मन्त्रिणः ॥२७॥

शक्तियुक्तोऽप्यशक्तः परं साम्प्रतं नूतनः सर्वकारो जनेषु प्रियः ।
अर्धलक्षैकसैन्यैरनुप्राणितः सर्वकारो नवः क्रान्तिकृन्निश्चयात् ॥२८॥

बर्वरस्याऽऽहवस्यावसानं कुतो राष्ट्रभूमेर्विभागं विना साम्प्रतम् ।
शान्तिसंकल्पना नास्ति रूसेऽधुना मित्रराष्ट्राणि विश्वासघातं व्यधुः ॥२९॥

नूतना क्रान्तिरेवात्र मुक्तिं ध्रुवं सैनिकानामसन्तोषसंभागिनाम् ।
संविधातुक्षमा सर्वदा भूतले सा विना हिंसया नैव संजायते ॥३०॥

लेनिनस्यात्र वाण्यां जनानां भृशं दुःखितानां हि दुःखं विवेश ध्रुवम् ।
आर्तसंरक्षणं देहनाशोऽथवा भूतलेऽस्मिन्महामानवानां व्रतम् ॥३१॥

लेनिनो घोषणां प्राकरोद् भीषणां शीघ्रमस्थायितन्त्रस्य शक्तिं जवात् ।
बर्बरेभ्यः समाच्छिद्य बोल्शेविका: गृह्णतां स्याद् यतः शान्तिरग्रे स्थिरा ॥३२॥

कान्दिशीकः किरेन्स्की विरोधं व्यधात् तस्य संगर्जनायास्तदानीं भृशम् ।
रक्तपातेन याऽऽप्ता निजायत्तता खण्डिता सा भविष्यत्यतो निश्चितम् ॥३३॥

देशभङ्गं दिदृक्षन्ति ये मानवाः कुर्वतां ते कृतिं **लेनिनेनो**दिताम् ।
जागरूका जना उत्थिताः स्युः परं सत्पथं याति लोके हि सत्याग्रही ॥३४॥

**फ्रान्समार्गेण** याते तु **रूसे** भवेन् नैव शान्तिर्नवा क्रान्तिरेतद् ध्रुवम् ।
**लेनिनो** वै प्रजातन्त्रहत्याकृते यत्नवानस्ति सत्यं हि दर्पान्वितः ॥३५॥

सैनिका नाविकाः साम्प्रतं **लेनिने** भक्तिमन्तः किलेत्थं **किरेन्स्की**मतिः ।
**लेनिनेनो**त्पथं ग्राहिता एतके सन्ति **बोल्शेविकाः** क्रान्तिसम्पोषकाः ॥३६॥

**लेनिन**स्यारयस्तस्य तां योजनां गुप्ततो निष्फलामेव कर्तुं रताः ।
क्रान्तिबीजान्वितां गुप्तसंयोजितां तत्क्रियां पूर्णतो निन्दितां मेनिरे ॥३७॥

तद्विरोधेन चित्ते भृशं दुःखितो **लेनिनः** श्रान्त एवाऽऽधिभिः सर्वतः ।
**नेइवालां** ययौ मित्रगेहे तदा पूर्णविश्राममिच्छन्नितः साम्प्रतम् ॥३८॥

स्वास्थ्यदं ग्राम्यवायुं सिषेवेऽधुना पुष्पितानां तरूणामधो निश्चलः ।
दीर्घनिद्रान्वितः स्वास्थ्यमाप द्रुतं पथ्यसेवीव दुर्व्याधिसंपीडितः ॥३९॥

प्रातरेवैकदा द्वारि हर्षान्वितः **सौविलीएव**मेकं ददर्श क्षणात् ।
क्रान्तिसंसूचनां **पैत्रगाद**स्थले दत्तवान् स्तब्धकर्णोऽभवल्**लेनिनः** ॥४०॥

तूर्णमुत्थाय शय्यातलात् तुष्टधीः प्राह गन्तास्म्यहं काल एवागतः ।
किं कदा कुत्र जायेत लोके न वा, निर्णयस्य क्षणानां स्थितिश्चाध्रुवा ॥४१॥

पूर्वमेवात्र **बोल्शेविकाः** प्राचरन् नाविकानां तथा सैनिकानां पुरः ।
सैनिका नश्च **शर्मण्यदेश**स्थितैर् मित्रतामेव कुर्युः समं सैनिकैः ॥४२॥

देशसीमास्थिताः सैनिकाः सर्वतो मुक्तशस्त्रा गृहान् गन्तुमेवोद्यताः ।
स्वेच्छया राजशिष्टिं विना साम्प्रतं भूमिहीना ववण्टुः स्वयं मेदिनीम् ॥४३॥

युद्धमन्त्री **किरेन्स्की**र्भटान् प्राह वै शत्रुसैन्यं हि विद्रावयन्तु क्षणात् ।
युद्धवह्निस्तथाप्याशु विष्वक् सृतः शत्रुसेना प्रकर्षं गता चाभवत् ॥४४॥

युद्धकाङ्क्षां च **बोल्शेविकाः** सर्वतस् तत्यजुः स्वीयनेत्राज्ञया तत्क्षणम् ।
किन्तु **क्रोंस्टाडवर्ग**स्थिता नाविका आहवार्थं हि शस्त्रान्विता आययुः ॥४५॥

राजधान्यां हि सम्मर्द आसीत्तदा लेनिनो राजगेहस्य बाह्यस्थले।
द्रोहिणः क्रान्तिरक्षार्थमुत्प्रैरिरन् मामकाः! क्रान्तिरक्षार्थमुद्यच्छत ॥४६॥

द्रोहिणः सन्ति साम्राज्यवादस्य ये ते विरोधं प्रकुर्वन्तु वै संगताः।
सर्वकारस्त्वयं निन्द्य एव ध्रुवं किन्तु निन्द्या न बोल्शेविकाः सर्वदा ॥४७॥

ल्यूनचारस्किसम्भाषणञ्चाभवत् तेन चोत्तेजिता नाविकाः सर्वतः।
टारिडेराजगेहं समभ्याययुः सैन्यरूपेण वै पङ्क्तिबद्धा जवात् ॥४८॥

सेनया सार्धमेते श्रमेणान्विताः संगताः शस्त्रहस्ताश्च विद्रोहपाः।
नूत्नतन्त्रस्य वै तन्निदेशं विना क्रान्तिसंकल्पना सार्थिका चाभवत् ॥४९॥

सैनिकाः क्रन्दनं चक्रुरेवं तदा मन्त्रिणो मन्दिरे ये स्थिताः साम्प्रतम्।
ते बहिर्यान्तु वार्तां विधातुं समे निर्धनैः सैनिकैश्चोद्यतैर्वै समम् ॥५०॥

विक्टरश्चाययौ तत्क्षणं तेऽब्रुवन् बालिशोऽयं भवेत् किन्तु शस्त्रान्वितः।
सोऽपि रोषान्वितान्नायकान्वीक्ष्य तान् राजगेहं प्रयातुं त्वरां संव्यधात् ॥५१॥

किन्तु मार्गे जनैः संयतोऽयं ततो नाविकैर्मोटरे स्थापितस्तत्क्षणम्।
इत्थमस्मिन्निरुद्धे जगर्जुर्हि ते 'खण्डयामो वयं विक्टरं साम्प्रतम्' ॥५२॥

तत्र ट्राटस्किसम्भाषणेन द्रुतं नाविकाः शान्तिभावं नु जग्मुस्तदा।
व्यक्तिमेकां निहत्याद्य भोः सैनिका भो युवानः स्वशक्तिं वृथा मा कृथाः ॥५३॥

मोटराद्वै समुत्तार्य तं विक्टरं राजगेहस्य मध्येऽनयद्वै सुधीः।
नीतिमार्गस्थितानां नृलोके सताम् आर्तसंरक्षणं सर्वदा सद् व्रतम् ॥५४॥

नायकास्तत्र बोल्शेविकाः स्वस्थितिं दुर्बलां वीक्ष्य वै व्याकुलाः साम्प्रतम्।
कर्मवत्तत्फलं निष्फलं वान्यथा कर्तुमेतेऽधुना नाभवन् सुक्षमाः ॥५५॥

इत्थमेते स्वयं नाविकाः सत्वरं वायुना मेघमालेव दूरंगताः।
किन्तु सेनापरा क्रान्तिरक्षाकृते पूर्वसंकेतितं स्थानमेवाययौ ॥५६॥

नायकानामभावेन सापि क्षणं तत्र तस्थौ चचालान्यतश्च द्रुतम्।
किन्तु निर्माणसंस्थासु कार्ये रताश् चाययुर्निर्धनाष्टारिडस्याङ्गणम् ॥५७॥

रक्तसेना रुषा केचनाद्य द्रुतं राजगेहस्य मध्ये जवाच्चाविशन् ।
तत्र निर्भर्त्सनां नायकानां व्यधुः शस्त्रहस्ताश्च ते प्राचरन् सर्वतः ॥५८॥

दिग्गजा दानमत्ता यथा भूतले सञ्चरन्तीति लोके कथा विश्रुता ।
तद्वदेते विना सुष्ठु संयोजनां लक्ष्यहीनाः परं क्रान्तिसम्पोषकाः ॥५९॥

नूतनः सर्वकारस्तदाऽऽज्ञप्तवान् लेनिनाद्या गृहीता भवेयुः क्षणात् ।
तैर्हि सत्ताधिकाराय योयुध्यत इत्थमेते भृशं तान्निनिन्दुस्तदा ॥६०॥

नूतनः सर्वकारः सदा शङ्कितो द्वैधभावं भजन् कान्दिशीको भृशम् ।
गुप्तरूपेण जग्राह वै लेनिनं शीघ्रमेवानुवृत्तं विचाराक्षमः ॥६१॥

लेनिनः प्राह नाहं क्षमो यद्ग्रहे तत्र बोल्शेविकानां असमैषा सभा ।
लेनिनस्यानुगाः संगताः स्युर्नवे सर्वकारे टराटस्किरित्यं जगौ ॥६२॥

लेनिनस्यानुगा गुप्ततः सर्वतो वभ्रमुश्छद्मरूपान्विता भूतले ।
भीतभीताः सदा शङ्किता दुर्गता नीतवन्तो दिनानि स्वराज्येऽपि ते ॥६३॥

शॉटमेनः सदस्यानुवाचैकदा लेनिनं जीनवेकञ्च भिन्नस्थलम् ।
प्रेषणार्थं निदेशं व्यधां तैस्तदा तद्गतेर्हेतवे सुव्यवस्था कृता ॥६४॥

श्मश्रुहीनञ्च तं लेनिनं ते व्यधुर् जीनवेकं पुनः श्मश्रुणा संयुतम् ।
छद्मरूपौ तु फिन्लैंडसीमां तदाऽत्येतुमेतावभूतां समर्थौ बुधौ ॥६५॥

डाइटस्यालये शॉटमेनो हि तं लेनिनं वासयामास निश्चप्रचम्
हेलसिंकीसुनाम्नः सुरक्षाधिपस्यात्र लेस्नोयपुर्यां हि जीनोवकम् ॥६६॥

नैजराज्यं समाकर्ण्य देशे स्वक आगतोऽयं प्रवासव्रती लेनिनः ।
ज्यूरिचात्किन्तु शान्तिं न लेभे पुनः पैत्रगादस्थितो दुःखितात्माभवत् ॥६७॥

लेनिनो नीतिविज्ञो हि पङ्काविलां राजनीतिं न जग्राह कष्टेऽपि सन् ।
सत्यमार्गं न तत्याज सत्यव्रती सज्जनाः सत्यमार्गस्य सम्पोषकाः ॥६८॥

आत्मतृप्तोऽप्ययं तृप्तये सर्वदा निर्धनानां, प्रयत्नं चकार व्रती ।
जीवनं यापयामास पूर्णं मुदा द्रव्यहीनोऽपि हृष्टः स्थितः सर्वदा ॥६९॥

नीतिमन्तः स्वयं नीतिनिर्धारिणं स्वारिवर्गे च सर्गे सदा कुर्वते ।
दुर्जनैरावृता ये सदोन्मार्गगा दुर्धियस्ते द्रुतं यान्ति दुःखार्णवम् ॥७०॥

सत्यवादीव संवेपते भाषणाद् दूरदर्शी यथा ध्यानमग्नः सदा ।
पुण्यकर्मेव पापात्सदा निर्गतो लेनिनः साधुवत् सत्यपक्षाऽऽश्रितः ॥७१॥

कीर्तिमन्तो निजप्राणदानेन च कीर्तिसंक्षरणं कुर्वते सर्वदा ।
कीर्तिहीनेन तज्जीवनेनापि किं प्राणनाशेऽपि कीर्तिश्चिरस्थायिनी ॥७२॥

राष्ट्ररक्षाकृते जीवनस्य क्षणं व्यर्थमेकं न निन्ये व्रती लेनिनः ।
रक्तदानेन वै सर्वदासौ वशी राष्ट्रवृक्षं दृढाऽऽशान्वितोऽपोषयत् ॥७३॥

राष्ट्रदेवं सदा भक्तिभावेन यश् चार्चयामास शुद्धाऽऽत्मयुक्तो व्रती ।
द्राक् प्रबुद्धाञ्जनाञ् शक्तियुक्तांस्तथा सत्पथे प्रापयामास तस्मै नमः ॥७४॥

तमस्तोममपाकर्तुं प्राचीगर्भगतोऽरुणः ।
दिद्योतिषुर्जगत्सर्वं वितेने तरुणान् करान् ॥७५॥

इति पद्म-शास्त्रिविरचिते श्रीलेनिनामृतमहाकाव्ये "जौलाई-विद्रोहस्य असफलता" नाम द्वादशः सर्गः ॥

# त्रयोदशः सर्गः

## [ लेनिनस्य राज्यतन्त्रे ऐकाधिपत्यम् ]

न **बोल्शेविकाः** शक्तिमन्तस्तदासँस्ततस्ते बभूवुर्भृशं दुःखयुक्ताः ।
इतश्छद्मवेषेण कालं व्यतीयुर् नराः शक्तिहीनाः क्व पूजां लभन्ते ॥१॥

स्वशक्तिप्रकर्षेण सिंहो गजानां गलद्दानगण्डस्थलं दारयित्वा ।
तडित्तेजसेव प्रकर्षस्तरस्वी प्रधानं पदं प्राप वन्येष्वजस्रम् ॥२॥

जनाः स्वाधिकाराम्न हातुं समर्थाः सदा मानिनो ये समर्था नृलोके ।
धनानां जनानां कथा कास्ति तेषां क्षतिर्नास्त्यसूनां प्रहाणेऽपि येषाम् ॥३॥

तदा सैन्यरक्षाधिपाः सर्वतो वै जनानां विरोधात्तथाराजकत्वात् ।
द्रुतं राष्ट्रपातोऽत्र भावीति शङ्कां दधाना हृदि व्याकुलाः संबभूवुः ॥४॥

तदा **पैत्रगादस्य** वै नातिदूरे विशालं हि सेनादलं **कोनिलावः** ।
रुषा प्रैषयन्मर्दनार्थं श्रमेणान्वितानां महाक्रान्तिभाजां जनानाम् ॥५॥

स्वराष्ट्रस्थिताः **शर्मणी**राष्ट्रभक्ता विदेशस्थिता **लेनिना**द्याः समेऽपि ।
जवात्प्राणदण्डेन दण्ड्या, न चान्यो यतो मार्ग इत्थं जगौ **लूकमस्कीः** ॥६॥

श्रमेणान्विता ये च ते संविभेद्या यथा सम्भवेयुर्न संघातितास्ते ।
विरोधं यदीमे विधास्यन्ति तर्हि भविष्यन्ति सम्मर्दिता घोटकैश्च ॥७॥

**किरेन्स्की**विरोधे कृते चापि संसत् समायोजिता भिन्नवर्गैर्हि चैका ।
समीयुश्च वर्गा विभिन्ना जनानां **डुमा**द्यास्तथा शस्त्रयुक्ता भटाश्च ॥८॥

स्वराष्ट्रे हि ये नूतनं सर्वकारं पदभ्रष्टमिच्छन्ति कर्तुं ध्रुवं ते ।
जनाः क्रान्तिमार्गस्थिता भर्जिताः स्युः **किरेन्स्कीः** स्वसंघोषणां संजुघोष ॥९॥

इतः कोर्निलोवोऽब्रवीद् भीतभीतो यथाऽऽस्माकसैन्यं जयेत् सीमभागे ।
न चात्र प्रभावो भवेद् राजनीतेर् तथास्माकमत्रास्तु यत्नः सदैव ॥१०॥

इतः शर्मणीसैनिका आययुश्च पुनस्तेऽधिचक्रुस्तु रींगास्थलं तत् ।
किरेन्स्कीस्तथा कोर्निलोवश्च वार्तां परं चक्रतुः सैनिकानां विवादे ॥११॥

प्रजाः सैनिका उत्थिताः सर्वतश्च स्वशान्तिप्रकर्षाय वै युद्धयमानाः ।
व्यलक्षन्त रूसेऽधुना निर्धनास्ते निजक्रान्तिरक्षार्थमेवोद्यताश्च ॥१२॥

इतः पेत्रगादस्थले नागराणां सुरक्षादलञ्चाविरासीत्तदानीम् ।
यदग्रे हि बोल्शेविकानां दलं तत्पृथिव्यां प्रसिद्धाभवद्रक्तसेना ॥१३॥

किरेन्स्कीर्हि सर्वोच्चसेनाधिकारी बभूवात्र सम्बन्धविच्छेदकश्च ।
तथा रूसराष्ट्रे नु बोल्शेविकानां प्रभावः परं वर्धमानस्तदाऽऽस्ते ॥१४॥

सुदूरस्थितो लेनिनश्चाऽऽदिदेश दलं केन्द्रियं पत्रदानेन सद्यः ।
किरेन्स्कीविरोधं प्रकुर्मो वयं वै विधानेन भिन्नेन सङ्घस्थिताश्च ॥१५॥

जनाश्चान्ततस्तं किरेन्स्कीं पदात् स्वाद् अधः पातयिष्यन्ति दुर्नीतिभाजम् ।
परं साम्प्रतं तद्विरोधेन किं स्याद् वृथा वृष्टिरब्धावकालस्य काले ॥१६॥

तदा कोर्लिनोवं तु कारागृहस्थं तथान्यांश्च सेनाधिपान् क्रोधयुक्ताः ।
जना उद्यता हन्तुमासन् समन्तान् नरः कः समर्थो निरोद्धुं हि रुष्टान् ॥१७॥

दशैकाधिकान् सैनिकानामधीशान् भृशं कातरान् कान्दिशीकान् निगृह्य ।
तदा जघ्नुरेते रुषाऽधो निपात्य यथा केसरी जम्बुकानां शतानि ॥१८॥

पुनः पत्रमेकं स्वकीये दले सोऽलिखत्तत्र नैजं मतं व्याजहार ।
स्वयं लेनिनः शासने दत्तदृष्टिर् जनान्बोधयामास रक्षाधिपांश्च ॥१९॥

स्वयं शान्तिसम्बन्धयुक्ता ध्रुवं सम्भवेयुर्हि बोल्शेविकाः शस्त्रहस्ताः ।
वयं पेत्रगादस्थलं जेतुकामा नृलोके समर्थाः कथं सम्भवामः ॥२०॥

न हि क्रान्तिरेषा प्रतीक्षां करोति प्रकर्षस्य वा जातुचिज्जीवलोके ।
असन्तोष एवात्र हेतुर्जनानां ध्रुवं क्रान्तिरूपेण जागर्ति लोके ॥२१॥

न मास्कोस्थिताः पैत्रगादस्थिता वा श्रमेणान्विताः शान्तिमेष्यन्ति नूनम् ।
न चास्मानशक्तान् कदाचित्तु कुर्यात् क्षमां प्राणिनामत्र भावीतिहासः ॥२२॥

स्वराष्ट्रस्य रक्षामहत्त्वस्थलेषु द्रुतं स्वाधिकाराय नूनं यतध्वम् ।
तथा सेण्टपालादिदुर्गेषु शक्त्या नृलोके श्रियं शक्तिमन्तः श्रयन्ते ॥२३॥

श्रुतं वै जितानाञ्च बोल्शेविकानां तदा लेनिनो हेलसिन्कीस्थितोऽभूत् ।
स्वयं पैत्रगादस्थलं गन्तुकामो न हि क्रान्तिरेषा प्रतीक्षां करोति ॥२४॥

तदा लेनिनं प्राह फिन्लैण्डवर्त्ती सुहृच् शार्टमेनस्तु—बोल्शेविकानाम् ।
विचारोऽधुना पैत्रगादस्थले त्वं गमो मा यतो रक्षणं तत्र नास्ति ॥२५॥

स्वयं लेनिनः प्राह बोल्शेविकानां महत्त्वं वरीवर्धते ग्राम्यभागे ।
अतः शासनं स्वाधिकारे नयध्वं समर्था विजेतुं नराः कालसङ्घम् ॥२६॥

तदा शार्टमेनोऽब्रवीद् युक्तमेतत् परं नः समीपे न योग्या मनुष्याः ।
स्वयं शासनं ये नु सम्पादयेयुः क्व वैतादृशाः शासकाः सङ्घमध्ये ॥२७॥

तदा तं विहस्यावदल्लेनिनोऽयं श्रमेणान्विताश्चालयिष्यन्ति राज्यम् ।
विधास्यन्ति ते सर्वकारस्य भृत्याः स्वयं कार्यजातं स्वतन्त्रे हि राष्ट्रे ॥२८॥

समाप्तिर्भवेत् स्वाग्घ युद्धस्य राष्ट्रे धरा संविभाज्या द्रुतं निर्धनेभ्यः ।
जनाश्चाभिजात्यास्तथा जारजास्ते प्रभावाच्च्युताः स्युस्तदा नः स्थितिः स्यात् ॥

प्रधानस्थलेषु द्रुतं स्वाधिकारं विधाय श्रमेणान्वितानां श्रमेण ।
तदा सैनिकाः शान्तिसंस्थापनार्थं प्रदास्यन्ति संरक्षणं शस्त्रहस्ताः ॥३०॥

स्वयं शक्तिहीना वयं भाषणेन प्रजानां हितं नैव कर्तुं समर्थाः ।
दृढां भक्तिमुत्पाद्य सैन्येषु नूनं वयं शक्तिमन्तो भविष्याम इत्थम् ॥३१॥

यदा सैनिका नाविका रक्षकाश्च गृहान् स्वांस्तु विश्रान्तिभाजो व्रजन्ति ।
मिलित्वा वयं तैश्च तान् भेदयित्वा दृढां योजनां योजयिष्याम उग्राः ॥३२॥

ततः पैत्रगादं तथा बाल्टिवकं पुनर्मासकोमाशु जेष्याम आर्तैः ।
श्रमेणान्वितैर्दत्तसाहाय्यसार्थाः न चैवात्र सन्देहलेशोऽपि मेऽस्ति ॥३३॥

परामर्शमत्राददल्लेनिनोऽयं द्रुतं शक्तिरस्थायितन्त्राददिदानीम् ।
समाच्छिद्य गादस्थितानां बुधानां जनानां करेषु द्रुतं स्थापनीया ॥३४॥

विबोर्गाय मार्गस्थितं शार्टमैनं सुमन्दस्मितो राखिया सम्बभाषे ।
क्व भो गम्यते त्यज्यतां दुःखजातं स्वयं लेनिनः पेत्रगादं प्रयातः ॥३५॥

स्वहस्ते च विद्रोहकार्यं हि नीत्वा स्वयं लेनिनो निर्वृतिं नाजगाम ।
श्रमेणात्र शश्वद् ध्रुवं जागरूका लभन्ते स्वयं कार्यसिद्धिं महान्तः ॥३६॥

नृलोके श्रमं ये न कुर्वन्ति मूढा विषीदन्ति ते कर्मशून्याः कृतघ्नाः ।
श्रयन्ते श्रमं सज्जना जीवलोके श्रमेणान्वितानामसाध्यं किमस्ति ॥३७॥

स्वकर्तव्यमेवाऽऽचरन्तो नृलोके महान्तः सदा व्यापृतिं सन्दधानाः ।
यथा सप्तसप्तिः किरन् स्वप्रकाशं प्रसूते सुखं सम्पदः स्वाश्रितेभ्यः ॥३८॥

तथा ब्लादिमीरः स्वराष्ट्रस्य कार्यं कदा किन्न कुर्वन् मनुष्यैर्व्यलोकि ।
व्यथा वीरुधां सज्जनानां च नूनं सदा सौरभं विस्तृणीते पृथिव्याम् ॥३९॥

परार्थं हि जीवन्ति ये जीवलोके परार्थं हि शीतातपं सेवमानाः ।
विषं ते निपीयामृतञ्चोद्गिरन्ति सतां पादपानां कथेयं विचित्रा ॥४०॥

तदा लेनिनः प्राह ये मद्दलस्थाः सशस्त्रञ्च ते द्रोहमत्राऽऽरभन्ताम् ।
विना द्रोहजातेन साम्राज्यवादो जयी स्याद्वयं स्याम शक्त्या विहीनाः ॥४१॥

पदात् स्वाद् यदा स्याद् विनिष्कास्यमानः किरेन्स्कीस्तदा वै समे भूमिकर्षाः ।
भविष्यन्ति भूमेः स्वयं स्वामिनस्ते प्रजातन्त्रहत्याकरोऽयं किरेन्स्कीः ॥४२॥

सदस्यास्तदा सङ्गता लेनिनस्य समज्या द्रुतं स्थापिता सैनिकानाम् ।
समज्या स्वयं चाऽऽदिदेश प्रसिद्धं नवाऽऽदेशपत्रं तदा सैनिकेभ्यः ॥४३॥

स्वयं लेनिनः केन्द्रियां तां समज्यां स्वनिर्देशपत्रं लिलेख द्रुतं वै ।
समायात भोरत्र विद्रोहकालः सुबद्धैः प्रबुद्धैर्विलम्बो न कार्यः ॥४४॥

मतैरत्र निर्वाचितैर् नात्र शक्तेः परीक्षा तु विद्रोहसङ्घट्टनेन ।
दलीयेन जञ्जन्यते राजनीतेः स्वरूपं तदा स्पष्टमत्र प्रभावि ॥४५॥

झटित्यत्र वैद्रोहिकी रूपरेखा स्वयं तर्हि **बोल्शेविकै**र्निर्मिता सा ।
यया सैनिकेषु प्रभावो भवेत्तु यथा क्रान्तिरेषा चिरस्थायिनी स्यात् ।।४६।।

ययौ मण्डलं सर्वकारस्य पार्श्वे जगाद द्रुतं राजहर्म्यञ्च त्याज्यम् ।
स्वशस्त्राणि नश्चार्पणीयानि सद्यः स्वयं शासनत्याग एवं विधेयः ।।४७।।

कवोष्णेन रक्तेन मा रञ्जिताभूद् धरेयं भृशं शोषितानां जनानाम् ।
वृथा मानवानां विनाशो न कार्यः पिशाचाः स्वकृत्यैर्विनश्यन्ति लोके ।।४८।।

**किरेन्स्की**स्तदा प्राह य**ल्लेनिनेन** समस्ता व्यवस्था कृता सङ्घरस्य ।
वयं तद्विघाताय सञ्चेष्टमानाः स्वकर्तव्यमेवाऽऽचरामो ध्रुवं वै ।।४९।।

स्वयं घोषणां **डान** इत्थं चकार विनाशाय विद्रोह इत्थं हि राष्ट्रे ।
न **बोल्शेविकानां** जयो नात्र लाभस्तृतीया तु शक्तिः सुलाभान्विता स्यात् ।।

सुरक्षासभा स्यान्नवीना च कापि प्रजातन्त्रसंरक्षणार्थं हि भूयः ।
समर्था न **बोल्शेविका** राज्यतन्त्रं कदाचित्तु वोढुं शृणुध्वं शृणुध्वम् ।।५१।।

जना उत्थिताः स्युर्नवीना विपत्तिः श्व एवाऽऽपतिष्यत्यवश्यं हि राष्ट्रे ।
धरा सम्विभाज्या द्रुतं निर्धनेभ्यः स्वनीतेरियं घोषणा चात्र कार्या ।।५२।।

ततो **लेनिनो** निश्चिते कार्यकाले **समोल्नीं** गमिष्यामि मित्राण्यवोचत् ।
कृता गुप्तकक्षे तदा **लेनिनेन** **टराटस्किना** **स्टालिनेनापि** वार्ता ।।५३।।

स विद्रोह इत्थं द्रुतं प्रसृतोऽभूद् यथा ग्रीष्मकाले दवाग्निर्वनेषु ।
तथा मुख्यपत्रालये चान्यकेन्द्रे सुरक्षादलं स्वाधिकारञ्चकार ।।५४।।

तथा शीतकालस्य हर्म्यं समन्तात् समाक्रम्य तस्थुः क्रुधा सर्व एते ।
परं मन्त्रिणो निर्णयं नात्र कर्त्तुं समर्था बभूवुः स्थितिं वीक्ष्य भीमाम् ।।५५।।

सशस्त्राश्च ते सैनिका बद्धमौना, न कस्यापि पक्षे मतिञ्चाऽऽबबन्धुः ।
तटस्था, न चाशान्विताः क्रान्तिहीना विजेत्रा समं सैनिकाः सर्वदैव ।।५६।।

द्रुतञ्चागतः क्रिश्किनः प्राह सद्यो जना बोधयध्वं तु रोषं प्रमुच्य।
सदा सर्वकारस्य पक्षे स्थिताः स्त न चेद् गोलिकाभिर्विभिन्ना भवेत ॥५७॥

परं मेनिरे नैव बोल्शेविकास्ते वमाँश्चिक्षिपुः शान्तिविध्वंसनाय।
जनाः प्राविशन् राजहर्म्ये सभीतास् ततश्चैन्तनोवोऽब्रवदन्तदर्शी ॥५८॥

सदस्याः क्व दुःसर्वकारस्य सन्ति वयं तान् ग्रहीतुं समर्था इदानीम्।
स्वयं कोनवैलोव आह प्रवीणो भवद्भिर्वयं निर्जिता निश्चितं वै ॥५९॥

सदस्याँश्च शीघ्रं हि कारागृहेषु निपात्य द्रुतं नूतनः सर्वकारः।
श्रमेणान्वितानां तथा निर्धनानां जनानां सुखायात्र संस्थापनीयः ॥६०॥

यदा लेनिनेन श्रुतं सैनिकानाञ् च बोल्शेविकानां शुभं कार्यजातम्।
स्वमित्रैः समं गर्वितः स्तब्धगात्रः प्रहृष्टोऽभवद् घूर्णयन् मस्तकं सः ॥६१॥

श्रमेणान्विताः ! क्रान्तिरावश्यकीयं श्रमेणान्वितानां प्रयत्नैः सुसिद्धा।
वयं शोषितान् निर्धनान् दुःखपाशाद् द्रुतं मोचयिष्याम इत्थं जगौ सः ॥६२॥

अपाकृत्य तां प्राग्भवां कुव्यवस्थां वयं शासनं नूतनै रक्तदानैः।
नवीनं विधास्यामहे रूसमध्ये नवं जीवनं शोषितानां च शुभ्रम् ॥६३॥

वयं सङ्गताः क्रान्तिमार्गस्थविघ्नान् अपाकृत्य राष्ट्रे स्वतन्त्रे वसामः।
जनाः ! उत्थिताश्चास्य निर्माणकार्ये पुनर्योगदानाय सज्जा भवन्तु ॥६४॥

वयं भिन्नरूपा विभिन्नैः सुकृत्यैः स्वयं सर्वहारासमाजस्वरूपम्।
सुसंस्कृत्य संसारचक्रेण सार्धं मिलित्वा स्वतन्त्रां सृतिं सञ्चरामः ॥६५॥

स्वयं लेनिनोऽयं विचारेषु मग्नो भवेत्कीदृशो नूतनः सर्वकारः।
दृढं पौरुषं स्याच्च बुद्धिः प्रकृष्टा नवीनस्य तन्त्रस्य सञ्चालनाय ॥६६॥

विरोधो भृशं व्यापृतो रूसराष्ट्रे तदैकाधिपत्यं कृतं लेनिनेन।
परं तीक्ष्णबुद्ध्या प्रयत्नेन चायं जयं प्राप दुष्टेषु शङ्काकुलेषु ॥६७॥

स्वयं लेनिनोऽब्रूत सत्यं दलं नः स्वराज्याय संचेष्टते नाधुना तु।
इदानीं दलस्यैकमेवास्ति लक्ष्यं दलान्निर्गतानां द्रुतं मर्दनं स्यात् ॥६८॥

स कोशालयानां तथा **सैनिकानां** समाचारसञ्चारचञ्चच्चराणाम् ।
स्वयं राष्ट्रियां सम्पदं घोषयित्वा व्यवस्थां व्यधान्नूतनामाशु तत्र ॥६९॥

कथञ्चित् समाकारयत् तां सभां स विरोधेऽपि जाते गृहे **टौरिडे** तु ।
तदा चात्र **बोल्शेविकानां** सुरक्षाकृते सैनिकाश्चेतरे संप्रजग्मुः ॥७०॥

एकतन्त्रस्य शक्तेर्विकासाय वै
शान्तिसंकल्पना साम्प्रतं निश्चितम् ।
वीक्ष्य सा **लेनिनेनाथ** संघोषिता
प्रस्तुतिः **शर्मणोसन्धिसम्बन्धिका** ॥७१॥

सप्तमासोत्तरं **शर्मणोः** सत्वरं
रूसभूमिं स्वयं त्यक्तवान् दुःखितः ।
**इङ्गिलशामेरिकाफ्रान्ससैन्यैर्भृशं**
मर्दितः पङ्गुरस्य प्रतापः क्षणात् ॥७२॥

**जेरझिन्स्की सिमिल्नी**सभायाः स्थले
वीरचेकाचरैः संवृतः शक्तिमान् ।
**लेनिना**रीञ्जघानान्वहं युक्तधीर्
घातयित्वाऽथ स प्राप सौख्यं महत् ॥७३॥

**लेनिनः** **क्रेमलिन्**द्वारमध्यस्थितो
वीक्षते चाद्य रक्ताङ्गणस्थान् जनान् ।
यत्र पूर्वं कदाचिद्धि **नेपोलिनो**
दह्यमानञ्च **मास्कों** ददर्श ध्रुवम् ॥७४॥

इत्थमत्र दलयुद्धसुपोष्टॄन्—
निर्विजित्य निजराष्ट्रसुपोष्टा ।
**लेनिनः** सपदि शत्रुविहीनो
निर्वृतिं हि परमां समवाप ॥७५॥

इति **पद्म**-शास्त्रिविरचिते श्रीलेनिनामृतमहाकाव्ये "लेनिनस्य राज्यतन्त्रे ऐकाधिपत्यं" नाम त्रयोदशः सर्गः ॥

# चतुर्दशः सर्गः

[ लेनिनस्य महाप्रयाणम् ]

प्रतिबद्धकरः क्रमेलिने जयताद् राष्ट्रमिदं जहर्ष सः ।
भुवि यत्र सहस्रजारजा अभिषेकाय मुदा समाययुः ॥ १ ॥

समयप्रभवं तमस्तदा स्वयमेवास्तमुपागतं भृशम् ।
स्वयमेव नवोदितं रविं नृवरा नम्रतयानमँस्तदा ॥ २ ॥

शुचिरेष मितव्ययी शशी परिपूर्णः स्वकलाभिरीप्सितः ।
शुशुभे नितरां क्रमेलिने कृषकाणां प्रभुरेष लेनिनः ॥ ३ ॥

जनतापविमर्दने पटुर् द्विषतां तापविवर्धकोऽपि सन् ।
जनताजनमानितः सदा जगति प्राप यशः समुज्वलम् ॥ ४ ॥

श्रमिकः श्रमसाधनायुतः श्रियमाप्नोति शनैः शनैर्ध्रुवम् ।
कृतमद्य शुभं समृद्धये भवति स्राग्घि सतां मतं त्विदम् ॥ ५ ॥

नवजागरणे समुत्सुका निजराष्ट्रप्रमुखं क्रमेलिने ।
समवेक्ष्य ननन्दुरुद्यता विमतास्तस्य द्विषस्तदाभवन् ॥ ६ ॥

बहिरेव हि हर्षितः स्वयं स्वकलत्रेण समं रराज सः ।
हृदयं जलजं हिमाहतमिव तस्य प्रबभूव साम्प्रतम् ॥ ७ ॥

निजराष्ट्रसमुन्नतिः कथं भविता सम्प्रति लोकसङ्कटे ।
गणराज्यकथा कथं यदा जनता भिन्नमतावलम्बिनी ॥८॥

अपसर्पजनैश्च सूचितो जनसन्तापनिवारणाय च ।
परितः परिलुण्ठनादिकं समवेक्ष्य स्वयमादिदेश सः ॥ ९ ॥

विमता निहताश्च सैनिकैरपरे ये विदलानुयायिनः ।
सततं प्रगतेर्विरोधका यमलोकातिथयो भवन्तु ते ॥१०॥

विदलानुगताश्च सैनिकाः कृषकाश्चाप्यभवन् विरोधिनः ।
परितो गृहयुद्धभावनां प्रसमीक्ष्याद्य भृशं चुकोप सः ॥११॥

सुभटाँश्च तदा न्यवेदयन्नितरां सैन्यसुशिक्षिताञ् जनान् ।
द्विषतां दलनं विधीयतां न च शिष्टाः स्युरिमे यथा क्षितौ ॥१२॥

दृढशासनसूत्रधारको गृहयुद्धप्रतिरोधनोत्सुकः ।
हृदि चात्मबलेन **लेनिनो** विजयायैव मतिं दधौ तदा ॥१३॥

अधुना न जहौ स्वनिर्णयं प्रतिपक्षस्य च निर्णयेन वै ।
व्यथते कुकृतिः स्वकर्मणा सुकृतिश्चापदि निश्चलः सदा ॥१४॥

विपदां कुरुते हि सत्क्रियां सुकृती योऽस्य कुतो भयं भवेत् ।
शिवमार्गविचिन्तकः सदा लभते स्वात्मनि शान्तिसम्पदः ॥१५॥

यतते स्वयमेष शासकः सततं जारकुलस्य मृत्यवे ।
समवेक्ष्य विरोधिनस्तदा सकलान् हन्तुमसौ विचेष्टते ॥१६॥

दमनस्य च योजनां स्वयं विदधे वीक्ष्य विरोधिनस्तदा ।
दलनायकमेव सत्वरं प्रमुखं हन्तुमिमे प्रचक्रिरे ॥१७॥

महिलापि च **कैप्पला**भिधा समयं वीक्ष्य तदन्तिकं ययौ ।
गुलिकां निधनाय तस्य सा परिचाल्याशु पलायनं व्यधात् ॥१८॥

स च दैववशेन रक्षितो जनता तां जगृहे हि पापिनीम् ।
अथ **लेनिन**रक्षणं दृढं कृतवन्तश्च दलानुयायिनः ॥१९॥

दमनाय च योजनां स्वकां विफलां नैव कृती चकार सः ।
नियतां निजयोजनां सदा विनियोज्यैव बुधैर्विरम्यते ॥२०॥

स्थितिमत्र विभाव्य दुर्भगां झटिति **स्टालिन**मेवमादिशत् ।
दमने द्विषताञ्च सैनिकाः शमने सत्वरमेव युञ्जताम् ॥२१॥

ननु भावि भविष्यके तु यद् घटना साम्प्रतिकी तदिङ्गिका ।
स्थितिकालविवारचिन्तकः सुविदूरां घटनां विजानते ॥२२॥

मरणाय समर्प्य सादरम् ऋणरूपेण वयं स्वबान्धवान् ।
निजमित्रगणेन सङ्गताः सफलां क्रान्तिमिमाञ्च कुर्महे ॥२३॥

इह दुर्दमनेन निर्जिता फलदा चास्ति सदा वसुन्धरा ।
कृषिसस्यसमृद्धिवज्जनाः स्वयमुत्पाद्य विकासशालिनः ॥२४॥

निशितैरसिभिः प्रकर्तिता गृहयुद्धं प्रति लाभलोलुपाः ।
स्वयमेव शमं ययुस्तदा चलिते तत्र कठोरशासने ॥२५॥

कृषकाः ! मम देशवासिनः ! युवकाः ! निर्धनदाससेवकाः !
क्रियतां कदनञ्च सम्प्रति धनिकानाञ्च जघन्यकर्मिणाम् ॥२६॥

अथवा खलु ये विरोधिनो नवतन्त्रस्य विनाशमिच्छुकाः ।
नियतं सकलान् विनिघ्नत मम वो वा सुहृदो भवन्तु ते ॥२७॥

इति लेनिनवाग् विनिःसृता निखिलानर्थविनाशकारिणी ।
जनतापि विनिर्णयं ददौ प्रथमां क्रान्तिमिमां विधाय च ॥२८॥

इह मृत्युमुखे निपातिताः चरचेकादलमानवैः समे ।
निजकं च दृढं व्यधादिदं महिमा तस्य दलस्य राजते ॥२९॥

दृढशासनतन्त्रधारिणः समवेता इह बोलशेविकाः ।
जगतो विजयाभिलाषुका ह्यभियानं नवकं वितन्वते ॥३०॥

भुवि ये प्रगतेरुपासका धनहीनाश्च विकासकारिणः ।
प्रगतेरुपयुक्तसाधनैः कृतकृत्याः प्रभवन्तु सत्वरम् ॥३१॥

गृहयुद्धसमावृतोऽप्ययं जगतीयुद्धजयाभिलाषुकः ।
निजमार्क्समतस्य भावनां व्यतनोत् प्राज्यतमां धरातले ॥३२॥

जगति श्रमिकाः सुसङ्गता अधिकारप्रतिरक्षणोत्सुकाः ।
विदधुः प्रतिदर्शनादिकं नियतास्थाः स्वमतस्य पुष्टये ॥३३॥

जगति श्रमिणो न ते तु ये निजकार्यप्रसरावरोधकाः ।
अधिकारविधौ प्रमादिनः क्व लभन्ते सुखमत्र जीवने ॥३४॥

श्रमिकः श्रमसम्पदां पतिः परिपाता जगतो निसर्गतः ।
स च दुर्गतिभाक् कथं वसेद् बहुरत्नास्ति वसुन्धरा यतः ॥३५॥

इह संसदि लेनिनः स्वयं जगति क्रान्तिबलेन जित्वरः ।
प्रससार विकासकारिणीं श्रमिकाणां सुखदां स्वयोजनाम् ॥३६॥

भुवने श्रमिकाः सुसंहताः सतत क्रान्तिपथानुयायिनः ।
श्रमसत्क्रमणप्रचारणे निजयत्नान् सततं व्यचालयन् ॥३७॥

विचकास विकासयोजना श्रमिकाणां निजयत्नतः स्फुटम् ।
विविधेषु च मण्डलेषु वै खलु जातानि विवर्तनान्यपि ॥३८॥

श्रमिका जलसैनिकास्तदा गृहयुद्धे कृषकाश्च सङ्गताः ।
परितो हि विलुण्ठनं भृशं कृतवन्तश्च विभीषणां स्थितिम् ॥३९॥

परमत्र कठोरशासनं दमनं निर्घृणया विधाय नु ।
स्थितिमत्र दृढां दृढव्रती विदधौ नूतनशासनस्य तु ॥४०॥

दमनं स्वदलानुयायिनां विदधे राष्ट्रहितैषणारतः ।
दलनाथनिपातनोन्मुखाः शिवभाजः क्व भवन्ति भूतले ॥४१॥

इह गुप्तचरप्रतिक्रियां स्ववशे वीक्ष्य दलस्य नायकः ।
नितरामधिनायको बभौ गगने चन्द्र इवातिनिर्मलः ॥४२॥

जगति प्रथितो महानयं न च मेने श्रमिकात्परं निजम् ।
निजभक्तमसौ तु **नाथनं** निजमूर्तेः करणान्न्यवारयत् ॥४३॥

निजकृत्यविधौ स नैपुणीमगमत् प्राप च विश्रुतिं भुवि ।
निजकृत्यरतस्य तस्य तु प्रतिपक्षिक्षपणं सुखेलनम् ॥४४॥

स्वदलस्य विकासकर्मसु प्रतिबुद्धो न विलम्बकारकः ।
परपक्षविभेदने मतिः प्रथितासीत् पविवत् पुरस्सरा ॥४५॥

प्रजयाऽनुमतः पुमानयं पतितानां पतिरत्र सर्वतः ।
समभून्निजसंसदि स्वयं निजराष्ट्रप्रमुखः प्रजापतिः ॥४६॥

स विवेद मनःस्थितिं नृणां विदधे तान् सकलान् सुमोहितान् ।
जनशक्तिभृतां हि **लेनिनो** जगति प्राप यशः समुज्ज्वलम् ॥४७॥

चरमेषु दिनेषु जीवने बहुधोन्मत्त इव व्यचिन्तयत् ।
लघुरेष महाँश्च पादपः सफलः पल्लवितो भविष्यति ॥४८॥

सपदि स्वविचारशृङ्खलां जनतापार्श्वमसौ तु नीतवान् ।
जगति प्रथिता च सत्वरं चरमेच्छा निजजीवनस्य सा ॥४९॥

अहमस्मि रुजान्वितः स्वयं भवतामेव करेषु राष्ट्रियम् ।
विनिवेद्य विहाय भाविनं कृतिभारं चलितोऽस्मि साम्प्रतम् ॥५०॥

विनिवेद्य दलं स्वयं ययौ सपदि ग्राममसौ हि **गोर्किनः** ।
प्रमुखाश्च चिकित्सकास्तदा व्यथितस्यास्य परीक्षणं व्यधुः ॥५१॥

शिथिलं च वपुर्दृढं तदा विहता वागभवत् ततो गतिः ।
क्रमशः पुनरस्य शक्तता वपुरुत्थानविधावजायत ॥५२॥

दलनायकमामयोत्थितं जहृषुर्वीक्ष्य दलानुयायिनः ।
स्वयमेव स कर्मणि द्रुतं विदधेऽत्यन्तपरिश्रमं पुनः ॥५३॥

जनसंसदि चैकदा पुनर् जनतायाः प्रतिबोधने रतः ।
अवरुद्धगतिर् हि भाषणे न्यपतद् भक्तजनैर्विलोकितः ॥५४॥

रुज आक्रमणादयं पुनर् वपुषो ह्रासमविन्दत स्फुटम् ।
कृतिनो निजकर्मकौशलं विदधत्यन्तकसन्निधावपि ॥५५॥

दलनेतरि रोगशोषिते दलनेता तु **स्टालिनो**ऽभवत् ।
स च रुद्धगतिर्व्यलेखयन् निजराष्ट्रस्य भविष्यपत्रकम् ॥५६॥

मनसि स्वयमेव विव्यथे प्रविलोक्य स्वदलस्य दुर्दशाम् ।
अबलः पुनरद्य **लेनिनः** समयं यापयतीह दुःखितः ॥५७॥



गृह एव महोत्सवं तदा गृहिणी चास्य बृहद्दिने व्यधात् ।
महसि श्रमिकान्यमन्त्रयत् ससुखं रात्रिमथात्यवाहयत् ॥५८॥

उपकल्यमसौ मुहुर्मुहुर् विगतश्रीरभवद् विचेतनः ।
अधुना मरणं विनिश्चितम् उपरुद्धश्वसनक्रियस्य तु ॥५९॥

अणुवीक्षणयन्त्रवीक्षणात् शिरसस्तस्य शिरा न सुस्थिराः ।
चकिता अभवन् परीक्षका मरणं नाप कथं जितेन्द्रियः ॥६०॥

निधनस्य कथा प्रगे ववौ निखिलं राष्ट्रमिदं रुरोद ह ।
हिमपातमिषेण विस्तृतं धवलं तस्य यशो धरातले ॥६१॥

श्रमिकाः प्रययुश्च **गोर्किनो** नगरे चान्तिमदर्शनातुराः ।
विनता भयविह्वला भृशं रुदितेनाश्रुमुखाश्च मूर्च्छिताः ॥६२॥

शवमग्निरथेन नीयत इति दुःश्रुत्य ययुर्जनाः पथि ।
भुवि **लेनिनवाद**दायिनि ननु पुष्पाणि ववर्षुरानताः ॥६३॥

अरवाः खलु कोटिशो जना विलपन्तो हृदयेन सर्वतः ।
मरणं भुवि निश्चितं नृणाम् इति पुष्पाञ्जलयो वितेनिरे ॥६४॥

गणवेशमुपेत्य सज्जिता जनसम्मर्दभिया समन्ततः ।
प्रतिबद्धकराश्च सैनिका निजशस्त्राणि निपात्य बभ्रमुः ॥६५॥

शवमस्य सुरक्षितं दधुर् नगरस्यास्य हि शोणिताङ्गणे ।
युधि यत्र नु **लेनिना**वने निहताः पञ्चसहस्रसैनिकाः ॥६६॥

स्वदलं समबोधयत् **सटालिन** आरुह्य तु तत् स्थलं सुधीः ।
क्व गतः प्रियबन्धुरद्य नः प्रियनेता निजराष्ट्रभूषणः ॥६७॥

श्रमिकेण च जीवनं स्वकं श्रमिकाणाञ्च हिताय हापितम् ।
शयनं प्रकरोति सम्मुखे जनतन्त्रञ्च समर्प्य सोऽधुना ॥६८॥

पथि बद्धपदास्तवेङ्गिते प्रियनेतः ! वयमत्र संस्थिताः ।
इह सिद्धिमवाप्नवाम भोः प्रचलन्तस्तत्र कार्यपद्धतौ ॥६९॥

स्वदलैक्यसुगोपने पुनर् दलनीतेर्जगति प्रसारणे ।
वयमेकधिया प्रपालने निजनेतुर्वचसां च सम्मताः ॥७०॥

जगति प्रथितं महद्दृढं मम राष्ट्रं खलु प्रस्तरोपमम् ।
इदमेव विभेत्तुमिच्छुको धनवादो विजयाय चेष्टते ॥७१॥

कृषकाः श्रमिकाः स्वकर्मभिर् अवितुं राष्ट्रमिदं समुद्यताः ।
पुनरद्य हि को नु शक्तिभृद् भुवि चास्मत्प्रगतेर्विरोधकः ॥७२॥

वयमत्र विषादसंयुताः समवेता इह संस्मृतिस्थले ।
भुवि नेतृशुभाशिषा त्विदं गुरुतां यास्यति राष्ट्रमद्भुतम् ॥७३॥

महताऽऽशु निजश्रमेण तु तव कार्यस्य सुपूर्त्तये पुनः ।
कृषकाः श्रमिकाश्च सङ्गताः करबद्धा नतिमास्थितास्त्वयि ॥७४॥

इत्थं स्वराज्यविजयाय समर्प्य सर्वं
प्राणैः सह प्रतिपदं ह्यनुभूय कष्टम् ।
तुष्टोऽभवन्न च न यस्तु विषादयुक्तस्
तस्मै स्वराज्ययतये सततं नमोऽस्तु ॥७५॥

इति पद्म-शास्त्रिविरचिते श्रीलेनिनामृतमहाकाव्ये "लेनिनस्य - महाप्रयाणम्" नाम चतुर्दशः सर्गः ॥

# पञ्चदशः सर्गः

[ रूसभारतमैत्री ]

कुसृतिपरिसृतानामैश्यसम्मोहितानाम्
अतिरभसविनाशं जारजानां विधाय।
दिशि दिशि मधुगन्धं नैजतन्त्रस्य तन्वन्
मधुरिव जनभूत्यै जायतां रूसराष्ट्रम् ।।१।।

उदितमधिकवेगात् स्वत्वसम्प्राप्तिहेतोर्
जनबलसहयोगाद् राष्ट्रमेतन्निभाल्य ।
प्रखरकिरणजालैर् ध्वान्तविध्वंसनोत्का
रविरिव भुवनेऽस्मिन् नायकास्ते ननन्दुः ।।२।।

प्रतिदिनमघयुक्ता जारदुश्चेष्टितैर्ये
मृगवदतिविमुग्धा मोहपाशेन बद्धाः।
जटिलगुणनिबद्धां वागुरां त्रोटयित्वा
प्रगतिपथसुयानप्रोन्मुखास्ते बभूवुः ।।३।।

प्रथमवयसि दृष्ट्वा युद्धजातं विनाशं
निजनिजनिलयात्ते निर्ययुस्तीव्रगत्या ।
पुनरपि हृदि धृत्वा जीवनस्याभिलाषं
स्थविरतरुणबाला राष्ट्रकार्येषु लग्नाः ।।४।।

सुकृतिजनसुयुक्तं सभ्यसम्मानभाजं
जगति नवसमाजं लेनिनः स्थापयित्वा।
तदनु जवविकासं देश औद्योगिकीनां
निजनिशितधिया निर्माणिनीनां चकार ।।५।।

लघुलघुनगरेषु प्रास्फुरद् धूमलेखा
दिशि दिशि च युवानः प्राचरन् शिल्पमुख्याः ।
समजनि हि विकासः सूक्ष्मयन्त्रायुधानां
कृषिरतकृषकाणां, क्रान्तिरेवंविधाभूत् ॥६॥

निजकरकमलाभ्यां कोमलाभ्यां सुमुख्यो
नभसि नवयुवत्यो यानसञ्चालनोत्काः ।
अधिकृतिमभिपन्ना नैजतन्त्रे बभूवुर्
गृहनगरचिकित्सास्वास्थ्यसंस्थासु लग्नाः ॥७॥

इह कतिपयवर्षैर् वस्तुनिर्माणकार्ये
श्रमबलभृतियुक्तो रूस आत्मस्थितोऽभूत् ।
जगति विकसितानां प्रोन्नतानां समक्षं
सहचरसहयोगान्मूर्ध्नि स्थानञ्चकार ॥८॥

श्रमपथपथिकानां किन्न साध्यं नृलोके
दृढविनतभुजाभ्यामर्णवं ते तरन्ति ।
अहह ! मनसि तुष्टा नश्वरा देवदूता
निजकरकृतयानाच्चन्द्रलोकं प्रयाताः ॥९॥

जगति च परतन्त्राद् यन्त्रितानां जनानाम्
अनधिगतधनानां, कीदृशी दुर्दशाऽऽस्ते ।
इति दिशि दिशि गत्वा तत्त्वमेतन्निगूढं
निजनिशितदृशासौ लेनिनोऽबुद्ध सम्यक् ॥१०॥

भुवन उपनिवेशस्थापकानां कुजाले
दृढतरमनुबद्धा ये निरुद्धाश्च देशाः ।
अनुदिनमथ तेषां मुक्तिहेतोरजस्रं
पुनरधिकसयत्नः सन्मनाः सम्बभूव ॥११॥

झटिति नवविकासस्येच्छुकानां विकासे
नवविकसितरूसश्चैशियाप्रान्तभागे ।
निजविदितविकासज्ञानसाहाय्यदानाज्
जगति जनमनांसि द्रावयामास भूयः ॥१२॥

जनबलसहयोगात् क्रान्तिमास्थाय तूर्णं
समजनि निजतन्त्रो रूसदेशोऽधुना यः ।
स जयतु भुवनेऽस्मिन्नित्यमुं सन्दिशन्तो
दिशि दिशि नवदिल्यां भारतीया अहृष्यन् ॥१३॥

क्रमणविधिरसज्ञो व्लादिमीरश्चिचिन्त
भवतु भुवनमध्ये भारते क्रान्तिराशु ।
स्वमतमभिलिलेख स्नाग्घि पत्रप्रदानाज्
झटिति भरतभूजाः क्रान्तये संयतन्ताम् ॥१४॥

झटिति समगमस्तं लेनिनं भारतीयाः
स च सपदि सुधीस्तैः सङ्गतः क्रेम्लिनेऽभूत् ।
इह निजसुविचाराञ् श्रावयामास तस्थौ
मनसि च मुदितोऽयं तैः समं दीर्घकालम् ॥१५॥

प्रथममभिगतौ तौ भारताद्रूसराष्ट्रं
जगति विदितकीर्ती रायभूपेन्द्रनाथौ ।
प्रययुरथ च बी० एन्० दत्तसत्तारकाद्याः
शुभहृदयलखानोब्राहिमौ खानखोजी ॥१६॥

तदनु च गजदण्डोन्मण्डितां श्रेष्ठयष्टिं
मलयजतरुभूतां व्लादिमीराय दत्त्वा ।
सुहृदुरसि च नैजीं मित्रतां वर्धयन्तो
भरतवसुमतीजाः प्रस्थिता भारतं ते ॥१७॥

नृपतिरथ **महेन्द्रः** प्राह वार्तावसाने
दलितजनविभूत्यै वागियं **लेनिनस्य** ।
वयमिह परिजातक्रान्तिकृत्येन तुष्टाः
सततमभिलषामः सुदृढां **रूसमैत्रीम्** ॥१८॥

चरमवयसि रुग्णो **लेनिनोऽभूद्** यदा तं
प्रथितनिजनिबन्धं प्रेषयामास **दत्तः** ।
तदनु खलु यथाऽऽङ्ग्लाद् **भारतं** मोक्ष्यते तत्
स्वमतमभिलिलेख प्राञ्जलं **लेनिनस्तम्** ॥१९॥

जननमहिहितार्थं रक्तपट्टं भुजायां
मरणवरणदक्षो **भक्तसिंहश्च** बद्ध्वा ।
गलधृतयमपाशः साट्टहासं जगर्ज
"जयतु जयतु सत्क्रान्तिर्" गिरा **लैनिनीयम्** ॥२०॥

श्रमिकमनुजनेता **लेनिनः** क्रान्तदर्शी
निजविहितसुयत्नै**र्भारतं** मोक्तुकामः ।
जनबलसहयोगाद् **रूसवद्भारतेऽस्मिन्**
निजवयसि तुरीये यत्नवान सम्बभूव ॥२१॥

निखिलभुवनमध्ये सत्यसम्पोषकोऽयं
निजजननमशेषं राष्ट्रकल्याणकार्ये ।
यशसि च गमयन् स्वं प्राप्य लक्ष्यं हृदिस्थम्
अमरपदमवापद् **गान्धिरित्थं** जगाद ॥२२॥

जगति नवनवा या **रूसजा** क्रान्तिरेषा
निखिलनभसि कल्ये तीव्रदेदीप्यमाना ।
भुवनजनविबोधे तारकेव प्रसिद्धा
वदति निजविचाराञ् **श्रीरवीन्द्रः** कवीन्द्रः ॥२३॥

